# काव्यप्रकाशः

दश उल्लासैः रचितः अलङ्कारशास्त्रग्रन्थः भवति काव्यप्रकाशः। अस्य कर्ता आचार्यमम्मटः शैवागमानुयायी निखिलशास्त्रनिष्णातो 'वाग्देवतावतारः' इति नाम्ना प्रसिद्धः। सः श्रीमतः जैयटस्य पुत्रः व्याकरणमहाभाष्यस्य प्रदीपम् इति व्याख्यायाः रचयितुः कैयटस्य ज्येष्ठभ्राता च। अयं काश्मीरदेशे अजायत। सः वाराणस्याम् अध्ययनं कृतवान्।

अयं मम्मटः क्रिस्त्वब्दस्य एकादशशतके प्रादुरभूत्। माणिक्यचन्द्रेण रचिता सङ्केताख्या टीका काव्यप्रकाशस्य प्राचीनतमा टीका इति उच्यते। राजानकरुय्यकेण विरचिता अपरा सङ्केताख्या टीका अपि वर्तते। सम्प्रति काव्यप्रकाशस्य पञ्चसप्ततिः टीकाः समुपलभ्यन्ते।

## काव्यप्रकाशस्य मङ्गलश्लोकः

समाप्तिकामो मङ्गलमाचरेत् इति सरणिमनुसरन् ग्रन्थकारो मम्मटः स्वग्रन्थस्य काव्यप्रकाशस्य निर्विध्नपरिसमाप्तये स्वेष्टदेवतां कविभारतीं तदभेदेनाऽध्यवसितां वाग्देवीं च स्तौति-

'नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति।।'

कवेर्भारती जयतीति सम्बन्धः। किं कुर्वती? निर्मितिं - निर्माणम्, आदधती - प्रकाशयन्ती। कीदृशी निर्मितिः? - नियतिकृतनियमरहितां - नियतिः दैवाऽपरपर्यायम् अदृष्टम् आमुष्मिकस्वर्गादिजनकम्, तत्कृतो नियमश्च स्वर्गादि योग्यशरीरान्तरोत्पादनद्वारैव स्वर्गोपधायकत्वरूपस्तद्रहिताम्। ह्लादैकमयीम् - ह्लादः - सुखम्। एकशब्दः संख्येयवाचकः। एकमेव वस्तु प्रकृतं प्राचुर्येण प्रस्तुतं यस्यां सा एकमयी। ह्लादेन एकमयीति ह्लादैकमयी। ह्लादैकमयीम् - सुखमात्रस्वरूपाम्। बह्मनिर्मितिः सुखदुःखमोहस्वभावा।

अनन्यपरतन्त्राम् - अन्यस्य कविभारतीभिन्नस्य, परतन्त्रा - अधीना न भवति ताम् - अनन्यपरतन्त्राम्। स्वोत्पत्तौ कविभारतीं विहाय अन्यद् अनपेक्षमाणम्।

किञ्च नवरसरुचिराम् नव- नवसंख्याका रसाः श्रृङ्गारादयो यस्यां नवरसा, सा चाऽसौ रुचिरां ताम् एवं बहुव्रीहिगर्भः कर्मधारयः। प्रजापतिनिर्मितौ षडेव रसाः न च सा तैर्हृद्यैव, कटुकषायतिक्तानामहृद्यत्वात्। भारतीनिर्मितौ तु नवसंख्याका रसास्तैश्च हृद्यैव सा, सर्वेषां प्रेमास्वादब्रह्मास्पदसम्पर्कत्वेन हृद्यत्वात्। कवेः लोकात्तरवर्णनानिपुणस्य कालिदासादिसदृशस्य कस्यचित् काव्यकर्तुः, भारती - काव्यम्। काव्याधिष्ठात्री देवता च। जयति- सर्वोत्कर्षेण वर्तते इत्यर्थः जयति - उत्कर्षेण वर्तते, नमस्कारो व्यज्यते। निर्माणव्यतिरेकमुखेन चतुर्मुखात् कविभारत्या आधिक्यमिति व्यतिरेकालङ्कारो व्यङ्ग्यः।

## काव्यप्रकाशग्रन्थस्य अनुबन्धचतुष्टयम् ।

'प्रवृत्तिप्रयोजकज्ञानविषयत्वम् अनुबन्धत्वम् ।' अनुबन्धशब्देन च विषयः, प्रयोजनम्, सम्बन्धोऽधिकारी चेति चतुष्टयं व्यपदिश्यते । तत्र काव्यस्वरूपादिकम् अस्य ग्रन्थस्य विषयः । अस्य च ग्रन्थस्य काव्याङ्गतया काव्यफलैरेव फलत्वं, तथा च 'काव्यं यशसेऽर्थकृते' इत्यदिना प्रतिपादितानि यशः, धनप्राप्तिः, व्यवहारज्ञानम् अमङ्गलविनाशः, परमानन्दप्राप्तिः, युक्तोपदेशाश्चेति षट् काव्यप्रयोजनानि एवास्य प्रयोजनानि । अपि च - काव्यस्वरूपगुणदोषालङ्कार रसादिस्वरूपज्ञानम् अस्य ग्रन्थस्य साक्षात्प्रयोजनम्, यश आदीनि परम्परया प्रयोजनानीति । विषयग्रन्थयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः, प्रयोजनग्रन्थयोस्तु प्रयोज्यप्रयोजकभावः । अधीतव्याकरणकोशादिरनधीतसाहित्यशास्त्रश्चाधिकारी ।

## काव्यप्रयोजनानि

काव्यस्य निर्माणे आस्वादने च कवेः सहृदयस्य च सर्वथा अभ्युदयात्मकानि प्रयोजनानि मम्मटभट्टेन काव्यप्रकाशस्य प्रथमोल्लासे वर्णितानि । ते च

'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ।।'

लोकोत्तरवर्णनानिपुणस्य कवेरसाधारणं तादृशवर्णनात्मकं कर्म काव्यं, यशसे - कीर्तये, अर्थकृते-धनकारणाय, व्यवहारविदे - आचारवेदनाय, शिवेतरक्षतये - अमङ्गलविनाशाय, सद्यः - समनन्तरमेव, परनिर्वृतये - परमानन्दाय, कान्तासम्मिततया - मनोरमातुल्यतया, उपदेशयुजे - युक्तोपदेशाय भवतीति शेषः ।

अत्रः यशः, अर्थः, अमङ्गलविनाशश्च मुख्यतया कवेरेव, व्यवहारज्ञानोपदेशयोगौ सहृदस्यैव, कवेस्तयोः सिद्धत्वात् । परनिर्वृतिरपि सहृदयस्यैव रसास्वादनकाले कवेरपि सहृदयान्तःपातित्वात् । तदुक्तं प्रदीपे - 'काव्यास्वादनकाले कवेरपि सहृदयान्तःपातितया रसास्वादः' इति ।

तथा च काव्यं कालिदासादीनामिव यशः, श्रीहर्षादेर्धावकादीनामिव धनम्, आदित्यदेर्मयूरादीनामिव अनर्थनिवारणञ्च । करोति । सहृदयस्य च काव्यश्रवणसमनन्तरमेव सकलप्रयोजनमौलिभूतं रसास्वादनसमुद्भूतं वेद्यान्तरसम्पर्कशून्यं रसास्वादनरूपमानन्दं करोति । यथा चोक्तं साहित्यदर्पणे-

राजादिगतपृथ्वीपालनादि समुचिताचारपरिज्ञानम्, रामादिवद् वर्तितव्यं न रावणादिवद्, इति उपदेशं च निर्मिमीते । यद्यपि कवेरिव सहृदयस्यापि यशोऽर्थमनर्थनिवारणं च करोति काव्यम्, किन्तु मुख्यरूपेण कवेरेव तस्यैव कृतित्वात् साक्षात् सम्बन्धादिति भावः । अत एव वृत्तौ - यथायोगं कवेः सहृदयस्य च करोतीति प्रतिपदितम् ।

उपदेशाय वेदाः पुराणनि च सन्ति तर्हि तदर्थं काव्यस्य क उपयोग इति न वक्तव्यम् । उपदेशस्य शब्दव्यपाररूपत्वात् । शब्दस्तु त्रिविधः- प्रभुसम्मितः सुहृत्सम्मितः, कान्तसम्मितश्चेति । तत्र शब्दप्रधानो वेदः प्रभुसम्मितमुपदिशति । अर्थप्रधानत्वं चेतिहासपुराणादीनाम् । ते हि सुहृत्सम्मिता अर्थतात्पर्यवन्तः 'एवं' कृते, इदमिष्टं भवति, एवं कृते, इदमनिष्टं भवति' इत्येतावन्मात्रं बोधयति न तु कार्ये नियोजयति । रसप्रधानश्च काव्यलक्षणः शब्दार्थोभाभ्यां विलक्षणः कान्तासम्मितमुपदेशं

करोति सरसतापादनेन सम्मुखीकृत्योपदेशं ग्राहयति। अतः काव्यं कान्तासम्मिततया युक्तोपेदशाय भवतीति प्रयोजनता तस्य।

एवं काव्यस्य सप्रयोजनत्वं स्पष्टमेवेति। अतः सर्वथा तत्र काव्ये उत्पादानाय आस्वादनाय च यत्नः कर्तव्यः।

**काव्यहेतुः**

शक्तिः, निपुणता अभ्यासश्च, इत्येत्त्रितयं तस्य काव्यस्य निर्माणे समुल्लासे च हेतुः। उक्तं च मम्मटभट्टेन- 'शक्तिर्निपुणता लेकज्ञास्त्रकाव्यद्यवेक्षणात्। काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे।।'

शक्नोति पुमान् काव्यनिर्माणाय आस्वादनानुभवाय चाऽनयेति शक्तिः कवित्वबीजरूपः संस्कारविशेषः प्रतिभापरपर्याय यां विना काव्यं न प्रसरेत् प्रसृतं वा उपहस नीयं स्यात्। यदुक्तं वाग्भटेन 'प्रतिभाकारणं तत्र व्युपत्तिस्तु विभूषणम्। भृशोत्पत्तिकृदभ्यास इत्यादिकविसङ्कथा।।' इति।।

अपि च निपुणता - व्युत्पत्तिः, लोकव्यवहारशास्त्रादिज्ञानजन्मेति भावः। तथा हि लोकज्ञास्त्रकाथाद्यवेक्षणात् निपुणता, लोकस्य स्थावरजङ्गमात्मकलोकवृत्तस्य, शास्त्राणाम् -छब्दोव्याकरणकोशकलागजतुरगखङ्गादि-लक्षणग्रन्थानाम्, तथा काव्यानां महाकविसम्बन्धिनां वाल्मीकिकालिदसप्रभृतीनां च, अवेक्षणात्- विमर्शनात् मुहुर्मुहुः तत्तत्पदार्थरसादिगोचरानुसन्धानादित्यर्थः। व्युत्पत्तिश्च तत्तदर्थरसादिगोचरो दृढतरः संस्कार एवेति भावः।

किञ्च काव्यज्ञशिक्षयाभ्यासः- काव्यं कर्तुं विचारयितुं च ये जानन्ति तदुपदेशेन कारणे - काव्यनिष्पादने, योजने - पदानामवापोद्वापे च पौनः पुन्येन प्रवृत्तिः इति त्रयः समुदिताः - मिलिताः, न तु व्यस्ताः, तस्य - काव्यस्य निर्माणे - रचनायाम्, समुल्लासे - उत्कृष्टतायां च हेतुर्न तु हेतवः। अयं भावः - शक्तिर्निपुणताभ्यास इति त्रयोऽपि मिलिता एव दण्डचक्रादिन्यायेन काव्यनिर्माणं प्रति हेतुः, न तु व्यस्ता, तृणारणिमणिन्यायेन प्रत्येकं हेतवः। एतच्च हेतुरित्येकवचनोपादानादेव लभ्यते। यथा - 'जात्याकृतिर्व्यक्तयः पदार्थः' इति गौतमसूत्रे 'पदार्थः' इत्येकवचनोपादानेन त्रिष्वेव चथाशक्यत्वं न तु प्रत्येकम्। तद्वदत्रापि परस्परसापेक्षत्वेनैव कारणता। अत एव 'इति हेतुस्तदुद्भवे' इत्यत्र इतिशब्दोऽपि चरितार्थः। स च मिलितोपस्थापनाय, अन्यथा तद्वैयर्थ्यं स्पष्टमेव।

**मम्मटोक्तं काव्यलक्षणम्**

लोकोत्तरवर्णनानिपुणकविकर्म काव्यम्। अत्र एतादृशस्य काव्यस्य किं स्वरूपमिति जिज्ञासा समुत्पद्यते। सन्ति च काव्यस्वरूपविषये विदुषां नैकधा दर्शनानि अतोऽत्र केषाञ्चित् प्रमुखविदुषां काव्यलक्षणानि समुद्ध्रियन्ते। तथा हि 'सङ्क्षेपाद् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली। काव्यम्.....।" इति अग्निपुराणे। 'शब्दार्थै सहितौ काव्यम्' - काव्यालङ्कारे भामहः 'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली - इति काव्यादर्शे दण्डी।

'ननु शब्दार्थो काव्यम् - इति रुद्रटः।

'काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वतते।' इति स्वनिर्मितसूत्रवृत्तौ वामनः। 'शब्दार्थशरीरं तावत्काव्यम्' - इति ध्वन्यालोके आनन्दवर्धनाचार्यः।

**'अदोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम्।**

**रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति'।।**

-इति सरस्वतीकण्ठाभरणे भोजः

'वाक्यं रसात्मकं काव्यम्' इति साहित्यदर्पणे विश्वनाथः। 'काव्यं रसादिमद् वाक्यं श्रुतं सुखविशेषकृत्' - इति शैद्धोदनिः 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्'- इति रसगङ्गाधरे पण्डितराजो जगन्नाथः। मम्मटस्तु काव्यप्रकाशे 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इति काव्यलक्षणं प्राह।

सम्प्रति एतेषां लक्षणानां सामान्येन विचारः करणीयः। वैदिककाले किमपि वर्णनं काव्यमिति कथ्यते स्म। तदनन्तरं पुराणेषु कविकल्पितस्य मनोहरस्यार्थस्य सौन्दर्ययुक्तं वर्णनं काव्यमिति मन्यते स्म। ततो रुद्रटकाले- 'रमणीयशब्दार्थौ काव्यम्' इति मान्यता जाता। ततः परं ध्वनिप्रतिष्ठाता श्रीमदानन्दवर्धनाचार्यः रसे सौन्दर्यमवलोकितवान्। ततश्च तदनुयायी मम्मट सौन्दर्यपूर्णं शब्दमर्थं च काव्यं वदति स्म। परन्तु विश्वनाथः पण्डितराजो जगान्नाथश्च सौन्दर्यपूर्णार्थस्य वर्णनमेव काव्यमिति अमन्येताम्।

एषु समस्तेषु काव्यलक्षणेषु वाग्देवतावतारस्य मम्मटभट्टस्यैव काव्यलक्षणं समीचीनं युक्तियुक्तं चेति विद्वांसः। अतस्तदेव प्रतिपदव्यावृत्तिपूर्वकं प्रतिपाद्यते-

'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इति शब्दार्थौ तत् - काव्यमित्यर्थः। काव्यस्यैव प्रकृतत्वात्। अर्थाद् अदोषौ, सगुणौ, सर्वत्र सालङ्कारौ क्वचिदस्फुटालङ्कारावपि शब्दार्थै काव्यम्।

ननु चमत्कृतिजनकीभूतवर्णनं काव्यमिति न वाच्यम्। वर्णनायाः शब्दार्थरूपत्वाद् भेदाभावात्। न च कविकर्म काव्यमिति व्युत्पत्या शब्दे एव काव्यत्वं न त्वर्थे, तस्य कविकर्माभावादिति वाच्यम्। आस्वादोद्बोधकत्वमेव काव्यप्रयोजकम्, तस्य चोभयत्रापि तुल्यत्वात्। ततश्च आस्वादव्यञ्जकत्वस्योभयत्राप्यविशेषात्, लक्ष्यतावच्छेकस्योभयवृत्तित्वाच्च, 'काव्यं पठितं श्रुतं गीतं रचितम्' 'काव्यं बुद्धम्' इत्युभयविधव्यवहारदर्शनाच्च शब्दर्थयुगलं काव्यमित्युच्यते।

यत्तु रसगङ्गाधरकारैः रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति काव्यलक्षणं कृत्वा उक्तम्-

यत्तु प्राञ्चः (काव्यप्रकाशकृदादयः) शब्दार्थौ काव्यमित्याहुस्तत्र विचार्यते - "अपि च काव्यपदप्रवृत्तिनिमित्तं शब्दार्थयोर्व्यासक्तम्' प्रत्येकपर्याप्तं वा? नाद्यः। एको न द्वाविति व्यवहारस्येव श्लोकवाक्यं न काव्यमिति व्यवहारस्यापत्तेः। न द्वितीयः। एकस्मिन् पद्ये काव्यद्वयव्यवहारापत्तेः। तस्माद् वेदशास्त्रपुराणलक्षणास्येव काव्यलक्षणस्यापि शब्दनिष्ठतैवोचिता" इति। तत्तु आग्रहमूलकमेव।

सम्प्रति 'अदोषौ' इत्यादिविशेषणानां सार्थकत्वं प्रतिपाद्यते-

अदोषौ-काव्यविधटिका ये च्युतसंस्कारादयः प्रबलदोषाः तद्रहितौ इति। 'अदोषौ' इत्यस्य, उत्कटदोषरहिताविति भावात्। दोषे उत्कटत्वं च सर्वथा रसप्रतीतिप्रतिबन्धकत्वम्। सगुणौ - माधुर्योजः प्रसादाख्या ये गुणाः तत्सहितौ

इत्यर्थः। न च ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः' इत्यादिना गुणानां रसधर्मतया कथं शब्दार्थविशेषणं सगुणाविति वाच्यम्। स्वाश्रयगुणाभिव्यञ्जकनिष्ठतापि गुणानामस्त्येव। अत एव अष्टमोल्लासे स्वयं वक्ष्यति- 'गुणवृत्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता' इति। अतः सगुणाविति शब्दार्थयोर्विशेषणं समीचीनमवे। अनलङ्कृती पुनः क्वापि - अस्यार्थः सर्वत्र साऽलङ्कारौ क्वचित्स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः।

अयं भावः अनलङ्कृती' इत्यत्र ईषदर्थे नञ्। 'पुनः क्वापि' इत्यत्र अपि- शब्दार्थोऽनुक्तसमुच्चयार्थकः। तेन सर्वत्र साऽलङ्कारविति विशेषणं समुच्चायति। तथा च क्वचित् 'यः कौमारहरः' इत्यादौ स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः

अतः काव्यप्रकशकारस्य मम्मटभट्टस्यैव काव्यलक्षणं समीचीनमिति समर्थितम्।

**'अनलङ्कृती पुनः क्वापि' इति काव्यलक्षणं प्रतिपादयताम्।**

तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि इति मम्मटकृतं काव्यलक्षणम्। अत्र 'अनलङ्कृती' इत्यत्र ईषदर्थे नञ्। अल्पार्थकत्वमत्र 'अस्फुटार्थकत्वम्' इति। ततः 'अनलङ्कृती' इत्यस्य स्फुटालङ्काररहिताविति भावः। क्व - क्वचित्, यत्र रसाद्यनुगमः स्फुट इत्यर्थः। क्वापि इति अपिना अनुक्तसमुच्चायकेन 'स्फुटालङ्कृती' इत्येव समुच्चीयते। तेन सर्वत्र सालङ्कारौ (रसाद्यनुगमस्थले तु स्फुटालङ्कारविरहेऽपि न काव्यत्वक्षतिरिति भावः)

उदाहरणं यथा-

' यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपास्ते चोन्मीलितमालतीसभयः प्रौढा कदम्बानिलाः

सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ। रेवारोधसि वेतसीतरुपते चेतः समुत्कण्ठते'।।

अत्र कश्चिदलङ्कारः न स्फुटः।

स्फुटालङ्कारविरहेऽपि ध्वनिकाव्यमेतत्।

अत्र 'हरो वरः' इत्यद्यनुप्रासस्य स्फुटस्यापि प्रकृतश्रृङ्गाररसप्रतिकूलवर्णधटितत्वेन नाऽलङ्कारता। अत्र विभावनाविशेषोक्ती अलङ्कारौ। अत्र वरोपकरणादीनामनुपभुक्तस्य कारणस्याऽभावेऽपि उत्कण्ठारूपकार्यस्य उत्पत्तिकथनाद् विभावना। किन्तु न सा स्फुटा। हेत्वाभावे नञादिपदेन प्रतिपादिते सत्येव विभावनायाः स्फुटत्वम्। यथा स एव हि वरो नेति न। एवं कारणसत्वेऽपि कार्याभावकथनं विशेषोक्तिः। अत्र चोपभुक्तत्वरूपकारणसत्त्वेऽपि अनुत्कण्ठारूपस्य तत्कार्यस्याभावकथनाद्विशेषोक्तिः। किन्तु सापि न स्फुटा। फलाभावे नञादिना प्रतिपादिते सत्येव विशेषोक्तेः स्फुटं भवेत्।

एवं विभावनाविशेषोक्योरुभयोरपि अस्फुटत्वे तन्मूलकरय सन्देहसङ्करालङ्कारस्यापि अस्फुटत्वम्। न चाऽन्योऽपि कश्चन स्फुटोङ्कारोऽत्र। तथा हि अर्स्मीति क्रियाया विभक्तिपरिणामेन सर्वत्र वरादावन्वयेन क्रियादीपकमेव स्फुटमित्यपि न वाच्यम्। अस्मीत्यस्याहमर्थकाव्यत्वात्। क्रियापदत्वेऽपि न दीपकत्वम्। सर्वेषामेव प्राकरणिकत्वात्। दीपकस्य प्राकरिणाप्राकरणिकविषयत्वात्। विभक्तिविपरिणामकल्पनाया एवाऽस्फुटात्मकत्वाच्च तदन्वीयानां।

एवकारस्याऽभेदपरत्वेनेतरनिषेधपरत्वायो गाच्च न परिसंख्या। वरादीनां गुणक्रियायौगपद्याभावान्न समुच्चयः। वरादीनामुपमानोपमेयाऽभावान्न तुल्ययोगिता। सहशदर्शनाऽप्रयोज्यत्वाच्चे। 'स एव हि' इत्यादेः प्रत्यभिज्ञाशरीरत्वाच्च न स्मरणालङ्कारः। यतः सुरभयोऽतः प्रोढाः स्वकार्यमर्था इति काव्यलिङ्गमस्फुटम्, अशब्दत्वात्। न चाऽत्र विप्रलम्भश्रृङ्गरस्य सत्वाद् रसवदलङ्कारः स्फुट इति। वाच्यम्। रसस्याऽत्र प्राधान्यान्नालङ्कारत्वम्। अप्राधान्ये इतररसोपपादकत्वे - अन्योत्कर्षत्वे एव तस्यालङ्कारत्वोपगमादिति भावः। वस्त्वलङ्काररूपस्य त्रिविधस्यपि व्यङ्ग्यस्य वाच्योपस्कारकतयाऽलङ्कारत्वमेवेति भामहभट्टोद्भटचिरन्तनालङ्कारिकमतेनेयं शङ्कासमाधानं च। मम्मटमते तु रसवदादीनमलङ्कारत्वमेव नेति वेदितव्यम्।

अत्राहि विप्रलम्भश्रृङ्गाररसप्रतीतिः काव्यत्वप्रयोजिका।

**काव्यभेदानुक्त्वा सोदाहरणमुत्तमकाव्यं विशदं विविच्य ध्वनिसिद्धान्तस्य मौलिकता प्रतिपाद्यताम्।**

मम्मटभट्टेन लक्षणसहिताः काव्यभेदा

उच्यन्ते - अत्तममध्यमाधमभेदेन काव्यं त्रिविधम्। तत्रेत्तमं काव्यं तावत् - इदमुत्तममतिशयिनि व्यङ्गये वाच्यद् ध्वनिर्बुधैः कथितः।'

वाच्याद् - अभिधावृत्तिप्रतिपाद्यादर्थाद् व्यङ्गये व्यञ्जनावृत्तिप्रतिपाद्येऽर्थे, अतिशयिनि- अधिकचमत्कारजनके सति इदं - काव्यम्, उत्तमम्। तदेव बुधैः- वैयाकरणध्वनिपण्डितैश्च, ध्वनिपण्डितैरित्येव मुख्योऽर्थः। ध्वनिः कथितः। वाच्यार्थाऽपेक्षया व्यङ्गयार्थस्याधिकचमत्कारित्वे उत्तमं ध्वनिर्नाम काव्यम्।

अस्य ध्वनिनामकरणे किं बीजमिति चेत्? उच्यते - बुधैर्वैयाकरणैः पतञ्जलि प्रभृतिभिः अर्थप्रत्याकत्वेन प्रधानभूतो यः स्फोटः तद्रूपं यद् व्यङ्गयं तद्व व्यङ्गयं तद्वायञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः। अयमर्थः पटादिभिर्वर्णसमुदायरूपैः क्षणिकैः पदैः स्फोटरूपो नित्यः शब्दो व्यज्यते। तेन चाभि व्यक्तेनार्थः प्रतीयते (स्फुटयति - प्रकाशयत्यर्थमिति स्फोटः) इति तादृशस्य ध्वनिरिति संज्ञेति वैयाकरणनिर्यासः।

तदनन्तरं तन्मतानुसारिभिः वैयाकरणमताऽनुसारिभिरन्यैरपि ध्वन्यालोकप्रभृतिषु ग्रन्थेष्विति भावः। न्यग्भावितम् - अप्रधानीकृतम्, वाच्यं - मुख्यार्थो येन तादृशस्य व्यङ्ग्यस्य व्यञ्जने ध्वनने, क्षमस्य - समर्थस्य, शब्दार्थयुगलस्य - तद्रूपस्य काव्यस्येत्यर्थः, ध्वनिरिति व्यवहार कृतः यथा प्रधानीभूतस्फोटस्य शब्दार्थयुगलरूपकाव्ये ध्वनिव्यवहार इति तात्पर्यम्। यथा-

'निः शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी त्वेयं तनुः।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापी स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्।।'

नायकमानेतुं प्रेषितां तमुपभुज्य प्रतिनिवृत्तां दूतीं प्रति स्नानकार्यप्रकाशनमुखेन सम्भोगं प्रकाशयन्त्या विदग्ध्दनायिकाया उक्तिरियम्।

हे मिथ्यावादिनि! तदन्तिकमगत्वैव मया बहुधा प्रसादितोऽपि नागत' इति मिथ्याभाषणशीले बान्धवजनस्य मम, अज्ञातपीडागमे - अज्ञातबान्धवजनपीडागमे, हे दूति! - सन्देशहरे! त्वमितः - मत्सकाशात्, वापीं स्नातुं गतासि, तस्य बहुधा कृतापराधस्य, अत एव अधमस्य दुःखप्रयोजककर्मशीलस्य नायकस्य, अन्तिकं - समीपम्, न पुनः - नैव, गतासीत्यनुषज्यते।

वापीस्नानोपपादकान्याह - तवेत्यर्थस्य स्तनतटादिभिः सर्वैरन्वयः। यतस्तव स्तनयो कुचयोः, तटं - प्रातदेशः, निःशेषं यथा स्यात्तथां च्युतं - स्खलितम्, चन्दनं यस्मात्तथाभूतम्। एवम् - अधर - अधरोष्ठः निःशेषं यथा स्यात्तथा मृष्टः शुद्धो, रागः - ताम्बूलरक्तिमा, यस्य तथाभूतः। एवं नेत्रे - चक्षुषी, दूरं - प्रान्तभागे एव, अनञ्जने - कज्जलरहिते, तथा इयं - प्रत्यक्षदृश्यमाना, तव तनुः शरीरम्, तन्वी - कृशा, अत एव पुलकिता - पुलकाः - रोमोद्गमाः सञ्जाता अस्यास्तथाभूतेत्यर्थः।

अत्र मिथ्यावादिनि! इत्यनेन तदन्तिकमागत्वैव मया गत्वा बहुशः प्रसादितोऽपि नागत इति मिथ्यैव वदसीति व्यज्यते - 'अज्ञातपीडागमे' इत्यनेन स्वार्थपरायणता व्यज्यते। 'दूति' इत्यनेन मिथ्याभाषणशीलत्वयोग्यता व्यज्यते। अत एव 'सखि' इति नोक्तं प्रतारणकर्तृत्वात्। स्तनतटमित्यनेन तटे एव मर्दनाधिक्यात् अन्यत्र नायककरपरामर्शाभावात् तटस्यैव तथाभूतत्वमिति व्यज्यते। 'अधर' इत्यनेन कामशास्त्रे अधरोष्ठे एव चुम्बनविधानात् तत्रैव तथात्वमिति व्यज्यते। दूरमनञ्जने' इत्यनेन प्रान्ते एव कामशास्त्रे चुम्बनविधानात् तत्रैव तत्कृतमनञ्जनत्वमिति व्यज्यते तदेतत्तानवं सम्भोगजन्यमेव।

इत्थं विदग्धाया गूढतात्पर्ययाऽनया वाचो युक्त्या ज्ञानसाधारण्येनैव सर्वेष्वर्थेषु वक्तृबोधव्यादिवैशिदिष्ट्यबलात् दुःखप्रयोजककर्मशीलत्वरूपाधमपदार्थधटककर्मपदार्थो वाच्यतादशायां कर्मान्तरसाधारण्येनावस्थितोऽपि व्यञ्जनया दूतीसम्भोग रूपेण पर्यवस्यति। इतरानपेक्षया झटिति व्यङ्ग्यार्थबोधकत्वात् अधमपदस्यात्र प्रधान्यम्। व्यङ्ग्यार्थस्य वाच्यार्थाधिकचमत्कारितैव ध्वनिर्नामोत्तमकाव्यस्य इदमुदाहरणम्। अत्र विप्रलम्भश्रृङ्गरप्रतीतिश्च काव्यत्वप्रयोजिका।

## मध्यमकाव्यस्य लक्षणं सोदाहरणं विशदयत

काव्यस्य उत्तममध्यमाधमभेदेन त्रैविध्ये सिद्धे गुणीभूतव्यङ्ग्यस्य अपरनामधेयस्य मध्यमकाव्यस्य स्वरूपमाह-

'अतादृशि गुणिभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्। व्यङ्ग्ये = व्यङ्ग्यार्थे, अतादृशि = वाच्यादनतिशायिनि, वाच्यापेक्षयाऽतिशयितचमत्कारानाधायके सति मध्यमं काव्यम्। तदेव गुणीभूतव्यङ्ग्यमिति बुधैः कथितम्।

व्यङ्ग्यस्य वाच्यादनतिशयश्च न्यूनत्वेन तुल्यत्वेन चेति द्विविधः। तत्राद्यं यथा-

'ग्रामतरुणं तरुण्या नववञ्जुरमञ्जरीसनाथकरम्। पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया।।

अत्र नववेतसमञ्जरीमण्डितकरं ग्रामतरूणं मुहुः पश्यन्त्यास्तरुण्याः मुखच्छाथा = मुखकान्तिः, मलिना भवतीति। वाच्यार्थः। व्यङ्ग्यार्थश्च दत्तसङ्केता काचिदुपनायिका तत्र न गता, उपनायकश्च वञ्जुललतासङ्केतस्थाने गत्वा प्रतिनिवृ त्तश्च इति, 'नव' इति पदेन 'मञ्जरीसनाथकरम्' इति पदेन च व्यज्यते। इदं च व्यङ्ग्यं 'वारं वारं ग्रामतरुणं

पश्यन्त्यास्तरुण्या मुखकान्तिर्मलिना भवति इति वाच्यार्थात् नातिरमणीयम्। वाच्यस्यैवाधिकचमत्कारित्वात्। अतो व्यङ्ग्यमत्र गुणीभूतमेव। एवमिदं मध्यमकाव्यस्योदाहरणम्।

तुल्यप्राधान्यस्योदाहरणं-

'ब्राह्मणातिक्रमत्यागो भवतामेव भूतये। जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते'।।

अत्र जामदग्न्यः क्षत्रियाणामिव रक्षसामपि क्षयं करिष्यतीति दण्डरूपं व्यङ्ग्यमिव भूत्युपदेशो मित्रत्वाभिधानरूपं सामोपायात्मकं वाच्यमपि प्रधानमेव। विग्रहवत् सन्धेरपि अनर्थनिवारकत्वेन विवक्षितत्वादिति भावः। अतो नात्र ध्वनिः, किन्तु गुणीभूतव्यङ्ग्यमेवेति।

**अधमकाव्यस्य लक्षणं भेदं च सोदाहरणं विशदयत**

काव्यं त्रिविधम्। वाच्याद् व्यङ्ग्येऽधिकचमत्कारिणि सति उत्तमं ध्वनिकाव्यम्। वाच्याद् व्यङ्ग्यार्थे न्यूनचमत्कारिणि तुल्यचमत्कारिणी वा मध्यमं गुणीभूतव्यङ्ग्यं काव्यम्। अव्यङ्ग्ये = स्फुटप्रतीयमानार्थरहिते सति चाधमं काव्यम्। तदेव चित्रमित्यभिधीयते। उक्तं च मम्मटेन- 'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्'। इति।

अत्र चित्रमित्यध्याहार्यम्। तथा चाऽव्यङ्ग्यं काव्यम् अवरम् = अधमं स्मृतम्, तदेव बुधैश्चित्रमिति कथितम्। तच्च चित्रं द्विविधम् - शब्दचित्रं वाच्यचित्रं चेति। चित्रमिति गुणालङ्कारयुक्तम्। अव्यङ्ग्यमिति स्फुटप्रतीयमानार्थरहितम्। गुणशब्दोऽत्र गुणाभिव्यञ्जकशब्दार्थपरम्। तत्र च शब्दचित्रं यथा-

'स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-

मूर्च्छन् मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः।

भिद्यादुद्यदुदारदर्दुरदरीदीर्धादरिद्रद्रुम-

द्रोहीद्रेंकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम्'

अत्र अनुप्रासः शब्दालङ्कारः। यद्यपि अत्र मन्दाकिनीविषयो रत्याख्यो भावस्तीर्थान्तराधिक्यवर्णनाद्व्यतिरेकालङ्कारश्च व्यङ्ग्योऽस्ति तथापि अनुप्रासे कवेस्तात्पर्यात् स तिरोधीयते, उद्भटाऽनुप्रासचमत्कारेण व्यङ्ग्यस्याच्छादनादिति भावः। अत एवाव्यङ्ग्यमिदं काव्यम्। अनुप्रासशब्दालङ्कारश्चमत्कारीत्यास्य शब्दचित्रता।

अर्थचित्रं यथा-

विनिर्गतं मानदमात्ममन्दिरात् भवत्युपश्रुत्य यदृच्छयापि यम्।

ससम्भ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियाऽमरावती।।

अत्र निमीलिताक्षीवेत्युत्प्रेक्षार्थालङ्कारश्चमत्कारीति वाच्यचित्रता। उत्प्रेक्षायां कवेस्तात्पर्यात् सन्तोऽपि वीररसादयो व्यङ्ग्यास्तिरोधीयन्ते इत्यव्यङ्ग्यमिदं काव्यम्।

## शब्दः कतिविधः? लक्षणोदाहरणसहितं प्रतिपाद्यताम्।

शब्दस्त्रिविधः - वाचकः, लाक्षणिको व्यञ्जकश्चेति। उक्तं च काव्यप्रकाशे 'स्याद् वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा' तत्र यस्य शब्दस्य यत्रार्थव्यवधानेन सङ्केतो गृह्यते स तस्य वाचकः। अर्थाद् यः साक्षात् सङ्केतितमर्थमभिधया बोधयति स वाचकः। यथा - 'गङ्गायां स्नाति' इत्यत्र गङ्गाशब्दः साक्षात् सङ्केतितं भगीरथानीतपयःप्रवाहविशेषरूपं गङ्गापदार्थम् अभिधया प्रतिपादयतीति गङ्गाशब्दः तस्य जलप्रवाहविशेषरूपगङ्गापदार्थस्य वाचकः।

यः शब्दो लक्षणया यमर्थं पतिपादयति स शब्दस्तस्यार्थस्य लक्षकः। यथा गङ्गायां घोषः इत्यत्र गङ्गाशब्दो लक्षणया तीररूपमर्थं लक्षयति, अतो गङ्गाशब्दस्तीररूपस्यार्थस्य लक्षकः।

यः शब्दो व्यञ्जनया यमर्थं प्रतिपादयति स तस्य व्यञ्जकः। यथा - 'गङ्गायां धोषः' इत्यत्र गङ्गाशब्दस्तटे शीतत्वपावनत्वाद्यतिशयं व्यञ्जनया प्रतिपादयतीति गङ्गाशब्दः शीतत्वपावनत्वाद्यतिशयस्य व्यञ्जकः।

शब्दस्य इदं विभागत्रयम् अन्योन्यसङ्कीर्णत्वात् न सङ्गच्छते इति चेन्न। तथा हि एकस्यैव गङ्गाशब्दस्य तटगतशैत्यपावनत्वाद्यतिशयस्य व्यञ्जकत्वात्, तटरूपस्यार्थस्य लक्षकत्वात्, जलप्रवाहरूपस्य चार्थस्य वाचकत्वादिति चेत्? न। 'स्याद् वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा' इत्यनेन वस्तुतोऽभिधालक्षणाव्यञ्जनारूपस्योपाधेः (शब्दव्यापारस्य) त्रित्वं विवक्षितम्, न तूपाधेयानाम्। न हि कश्चिद् वाचक एव, कश्चिल्लक्षक एव, कश्चिद् व्यञ्जक एवास्तीति नियमः। अत एव 'गङ्गायां धोषः' इत्यत्र एकस्यापि गङ्गाशब्दस्य वाचकत्वं, लाक्षणिकत्वं व्यञ्जकत्वं चोपपद्यते। उपाधीनां त्रित्वादेव उपाधेयभूतानां शब्दानां त्रित्वमुक्तम्। अत एव साहित्यदर्पणे विश्वनाथेनाह 'अभिधादित्रयोपाधिवैशिष्ट्यात्त्रिविधो मतः। शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा।।'

अर्थाद् - अभिधोपाधिको वाचकः, लक्षणोपाधिको लक्षकः, व्यञ्जनोपाधिको व्यञ्जकः, इति शम्।

## 'तात्पर्यार्थोऽपि केषुचित्' - व्याख्यायताम्

'घटं करोति' इति वाक्ये अभिधा घटपदेन कम्बुग्रीवादिमन्तं घटपदार्थम्, अम्विभक्त्या कर्मत्वमभिधाय विरमति। वृत्तिता तु न कस्याप्यर्थः, इति अपदार्थेऽपि वृत्तितावशाद् अनयोः संसर्गविधया भासते। इत्थं, तात्पर्यवृत्त्यैव पदार्थानां मिथोऽन्वयो भवतीति अभिहितान्वयवादिनां कुमारिलभट्टादिमीमांसकानां मतम्। इदमेव भाट्टमतं तौतातिकमतमिति च कथ्यते।

अन्विताभिधानवादिनः प्रभाकरमीमांसकस्य मते तु वाच्य एव वाक्यार्थः। तस्याऽयमभिप्रायः - 'देवदत्त गामानय' इत्यादिवृद्धप्रयुक्ते तादृशव्यक्तिसञ्चारे मध्यमप्रवृद्धवृत्तिं दृष्ट्वा बालोऽपि तस्य वाक्यस्य तदर्थबोधकतामनुमाय 'गामानय', अश्वमानय' इत्यनन्तरवाक्यप्रयोगाद् गवापसारणे अश्वानयने च प्रवृत्तिं दृष्ट्वा अन्वयव्यतिरेकाभ्यां कारकपदस्य क्रियापदार्थान्विते कारके, क्रियापदस्य कारकपदार्थन्वितक्रियायां च शक्तिमवधारयति। ततश्च प्रयोगकाले तस्य बालस्य प्रथमत एवान्वितबुद्धिर्जायते। तेनाऽभिधयैवान्वयबोधोत्पतौ किं तात्पर्यरूपवृत्त्यन्तरेणेति प्रभाकरमतानुयायिनां मीमांसकानां मतम्। इदमेव गुरुमतमिति कथ्यते।

परं नेदं मतं विचारसङ्गतम्। समान्यार्थस्याभिधया बोधेऽपि अन्वयरूपविशेषार्थस्य बोधाय तात्पर्यावृत्तिः स्वीकार्यैव। अन्यथा परस्परान्वयरूपस्य विशेषार्थस्य बोधस्य अशक्यत्वाद् अभिधया भानमेव न स्यात्।

साहित्यिका अपि भाट्टमतमेव स्वीकुर्वन्ति। काव्यप्रकाशकाराणां भाट्टमतमेवाभिमतम्।

एतेनेदं यत् साहित्यिकानां मते तात्पर्यवृत्तिप्रतिपाद्यः तात्पर्यार्थोऽपि अस्तीति दिक्।

**लक्षणा तेन षड्विधा' व्याख्यायताम्**

'सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा। विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात्साध्यवसानिका।

भेदाविमौ च सादृश्यात्सम्बन्धान्तरस्तथा गौणौ शुद्धौ च विज्ञेयौ लक्षणा तेन षड्विधा'।।

'गोर्वाहीकः' इत्यादौ विषयी = आरोप्यमाणः गवादिः, विषयः = आरोपस्याश्रयः वाहीकादिश्च यत्र यादृशलक्षणास्थले, तथा तेनैव रूपेण, स्वस्वधर्मप्रकारेण, गोत्ववाहीकत्वादिरूपधर्मप्रकारेणेति यावत् उक्तौ समानाधिकरण्येन निर्दिश्येते, समानविभक्तिकपदाभ्यां सप्रयोजनमुपस्थाप्येते, सा अन्या शुद्धा च सारोपा = सारोपलक्षणेत्युच्यते। आरोपेण सह वर्तत इति सारोपः अर्थात् - आरोप्यमाणः गवादिः, आरोपविषयश्च वाहीकादिश्च यत्र, अपह्नुतभेदौ (प्रकाशितवैधर्म्यौ) समान विभक्तिकपदाभ्यां सप्रयोजनमुपस्थाप्येते सा लक्षणा सारोपा।

'गौरयम्, 'गौः पठति' इत्यादौ, अन्यस्मिन् आरोपविषये, आरोपाश्रये वाहीकादौ, विषय्यन्तःकृते विषयिणा = आरोप्यमाणेन गवादिना, अन्तःकृते निगीर्णे सति, सा साध्यवसानिका साध्यवसानलक्षणा स्यादित्यर्थः। विषयनिगरणेन विषयिणोऽभेदप्रतीतिरध्यवसानम्, तेन सह वर्तत इति साध्यवसानेत्यर्थः। विषयिमात्रं यत्र निर्दिश्यते न तु विषयोऽपि सा साध्यवसानेति यावत्। विषयिणा विषयितिरोभावोऽत्राध्यवसानपदार्थः' इति प्रदीपकाराः।

इमौ सारोपसाध्यवसानरूपौ भेदौ सादृश्यात् - सादृश्याख्यसम्बन्धाद् गौणौ, तथा सन्बन्धान्तरतः = सादृश्येतरसम्बन्धात् कार्यकारणभावादिरूपात् शुद्धौ च विज्ञेयावित्यर्थः 'गौणौ' इत्यत्र गुणेभ्यो जाड्यमाद्यादिरूपेभ्यः आगतौ प्राप्तौ, इति विग्रहः इमौ सारोपसाध्यवसानरूपौ भेदौ, सादृश्यहेतू = सादृश्याख्यसम्बन्धहेतुकौ। गौणसारोपाया उदाहरणानि - गौरयम् गौः पठति' गां पाठय इत्यादीनि।

'गौर्वाहीकः' इत्यादौ गोशब्दो मुख्यया वृत्त्या वाहीकशब्देन सहाऽन्वयमलभमानोऽज्ञात्वादिसाधर्म्यसम्बन्धाद् वाहीकार्थं लक्षयति। वाहीकस्य अज्ञत्वाद्यतिशयबोधनं प्रयोजनम्।

शुद्धसारोपाया उदाहरणम् - 'आयुर्घृतम्' इति। शुद्धसाध्यवसानायास्तु - 'आयुरेवेदम्' 'आयुः पिबति' इति च। आयर्घृतम्' इत्यादौ कार्यकारणभावसम्बन्धादायुष्ट्वेन घृतबोधः। ततो व्यञ्जनया अन्यवैलक्षण्येनायुष्कारित्वरूपप्रयोजनप्रतीतिः। तदुक्तं 'साधारणगुणाश्रयणेन परार्थो लक्ष्यते' इति। लक्षणा तेन षड्विधा। आद्यभेदाभ्यां सह। तद्यथा - लक्षणा तावद् द्विविधा - शुद्धा गौणी च। शुद्धाऽपि द्विविधा - उपादानलक्षणा चेति। तेऽपि सारोपा साध्यवसाना चेति। इत्थं मिलित्वा लक्षणा षड्विधा।

अपि च व्यङ्ग्यस्य गूढाऽगूढत्वेन पूर्वेक्तषड्भेदस्य द्वैगुण्यात् प्रयोजनवती लक्षणा द्वादशविधा। तथा च व्यङ्ग्यरहिता रूढिलक्षणा च एकविधा। एवं मिलित्वा लक्षणा त्रयोदशविधा बोध्या।

**सोदाहरणं लक्षणाभेदान् विवृणुत।**

आदौ लक्षणा द्विविधा - शुद्धा गौणी च। शुद्धाऽपि द्विविधा - उपादानलक्षणा लक्षणलक्षणा चेति उपादानलक्षणा - लक्षणलक्षणेति द्विविधे सारोपा साध्यवसाना चेति। एवं शुद्धायाश्चत्वारो भेदाः। गौणी तु द्विविधा - सारोपा साध्यवसाना चेति। इत्थं मिलित्वा लक्षणा षड्विधा। क्रमेणेदाहरणम्-

1. उपादानसारोपा - 'कुन्ताः पुरुषाः प्रविशन्ति'
2. उपादानसाध्यवसाना - 'कुन्ताः प्रविशन्ति'
3. लक्षणसारोपा - 'अयुर्घृतम्'
4. लक्षणसाध्यवसाना - 'आयुरेवेदम्', गङ्गायां घोषः
5. गौणसारोपा - 'गौर्वाहीकः'
6. गौणसाध्यवसाना - 'गौरेवायम्'

इति प्रदीपद्योतयोः स्पष्टम्। सा च लक्षणा 'व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने' इति वचनेन रुढौ - प्रसिद्धौ सत्यां व्यङ्ग्येन रहिता भवतीत्यर्थः। एवम् अव्यङ्ग्यो सव्यङ्ग्या चेति द्विविधा लक्षणा। अव्यङ्ग्या रूढिलक्षणा, सव्यङ्ग्या च प्रयोजनवती। व्यङ्ग्यस्य गूढाऽगूढत्वेन पूर्वाक्तषड्भेदस्य द्वैगुण्यात् प्रयोजनवती लक्षणा द्वादशविधा। व्यङ्ग्यरहिता रूढिलक्षणा एकविधा। एवं मिलित्वा त्रयोदशविधा लक्षणा। तत्र गुढव्यङ्ग्या यथा - 'मुखं विकसितस्मितम्' इति। अत्र विकासः पुष्पधर्मः, स च स्मिते बाधितः असङ्कुचितसम्बन्धेन स्मितस्य सातिशयं लक्ष्यते, सौरभादिव्यङ्ग्यम् एवंविधं व्यङ्ग्यं काव्यवासनापरिपक्वबुद्धिभिः सहृदयैरेव संवेद्यम्, अतो गूढम्। अगूढं यथा - 'उपदिशति कामिनीनां यौवनमद एव ललितानि। अत्र उपदेशकर्तृकत्वस्य चेतनधर्मस्याऽचेतने यौवनमदे बाधात् सामान्यविशेषसम्बन्धेन आविष्कारमात्रं लक्ष्यम्, अनायासेन ललितज्ञानं व्यङ्ग्यम्। इदं सहृदयेतरैरपि अभिधेयवद् वेद्यम् इति अगूढम्। एवं त्रयोदशविधा लक्षणा संक्षेपेण व्याख्याता।

**का नाम श्रुतार्थापत्तिः, का चार्थापत्तिरिति सोदाहरणं विदशीक्रियताम्।**

यत्रानुपपद्यमानः शब्दः शब्दान्तरं कल्पयति सा श्रुतार्थापत्तिः यथा द्वारमिति शब्दः पिधेहीति क्रियापदम्। इयमेव शब्दाध्याहार इति कथ्यते।

'यत्र च दृष्टः श्रुतो वार्थोऽनुपपन्नमानोऽर्थान्तरं कल्पयति सा अर्थार्थापत्तिः अर्थापत्तिर्वा भवति।' तत्रैव द्वारमित्यर्थोऽनुपपन्न पिधेहीति क्रियां कल्पयति। इयमेवार्थाध्याहार इति।

**अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम्। तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसम्प्रत्ययः। गङ्गासम्बन्धमात्रप्रतीतौ तु गङ्गातटे धोष इति मुख्याभिधानाल्लक्षणायाः को भेदः'? इतीयं पङ्क्तिः काव्यप्रकाशग्रन्थाशयं विशदीकुर्वता भवता समीचीनतया व्याख्येया।**

लक्षणा तावद् द्विविधा - गौणी शुद्धा च। तत्र सादृश्यसम्बन्धमूला लक्षणा गौणी, तदितरसम्बन्धमूला शुद्धा।

मुकुलभट्टास्तु - 'गौर्वाहीकः' इत्यादि गौण्यां शक्यार्थलक्ष्यार्थयोः सादृश्याख्यसम्बन्धेनाऽभेदः प्रतीयते। शुद्धायान्तु शक्यार्थ-लक्ष्यार्थयोर्भेदः प्रतीयते। तदेव च औदासीन्यापरपर्यायं भेदप्रतीतिरूपं ताटस्थ्यं नाम। इदमेव च शुद्धाया गौणीतो भेदकम्। न तूपचारमिश्रणमित्याहुः।

किन्तु मुकुलभट्टस्य मतमिदं नितरामसङ्गतम् इति मम्मटभट्टस्तन्निराकरोति। तथाहि - अनयोः उक्तयोः उपादानलक्षणालक्षणलक्षणारूपयोः शुद्धाया भेदयोः लक्ष्यस्य तीरादेः लक्षकस्य गङ्गादेश्च भेदरूपं - भदेप्रतीतिरूपं, ताटस्थ्यम् = औदासीन्यं नास्ति। किन्तु अभेदप्रतीतिरेव। अथवा - लक्ष्यस्य लक्षकस्य च भेदप्रतीतिरूपं ताटस्थ्यं न भेदरूपं = गौणीतः शुद्धाया न भेदकमित्यर्थः। अभेदबुद्धिं विना प्रयोजनप्रतिपत्तेरभावादिति भावः। तटादीनां लक्ष्यार्थानां गङ्गादिशब्दैः = प्रवाहादिबोधकगङ्गादिशब्दैः प्रतिपादने = बोधने सत्येव, तत्त्वप्रतिपत्तौ हि = शक्यलक्ष्ययोर्गङ्गातीरयोरभेदप्रतिपत्तौ सत्यामेवेत्यर्थः। प्रतिपिपादयिषितप्रयोजनसम्प्रत्ययः- प्रतिपादयितुमिष्टस्य प्रयोजनस्य गङ्गागतशैत्यपावनादेः सम्प्रत्ययः = प्रतीतिः, तीरादौ भवतीत्यर्थः। न तु भेदप्रतीतौ। अभेदबुद्धिं विना प्रयोजनाऽप्रतीतेः। अतो न ताटस्थ्यं भेदकमित्यर्थः।

अयं भावः 'अन्यत्राऽन्यशब्दप्रयोगस्तद्धर्मप्राप्त्यर्थः' इति न्यायेन तीरे गङ्गाशब्दप्रयोगे गङ्गागतशैत्यपावनत्वादि-प्रतीत्यर्थः। शैत्यादिप्रतीतिस्तु गङ्गात्वेन तटस्य प्रतीतावेव जायते, न तु गङ्गासम्बन्धमात्रप्रतीतौ। न वा तीरमात्रप्रतीतौ तथा सति गङ्गातटे घोषः इत्यत्रापि सम्बन्धमात्रप्रतीतेः शक्यलक्ष्यप्रतीत्योः फलभेदो न स्यात्। तदेवाह-गङ्गासम्बन्धमात्रप्रतीतौ तु 'गङ्गातटे धोषः' मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः? अर्थाद् - गङ्गासम्बन्धमात्रप्रतीतौ तु 'गङ्गातटे धोषः' इति वाचकं शब्दं स्वायत्तं विहाय 'गङ्गायां घोषः' इत्यवाचकशब्दप्रयोगाऽनुपपत्तिरेव स्यात्, 'स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे' इति न्यायात्। अतः शुद्धायामपि अभेदप्रतीतेर्न ताटस्थ्यं भेदकम्, किन्तूपचारमिश्रणमेव भेदकमिति भावः।

**'गौर्वाहीकः' इत्यत्र का नाम लक्षणा, कुत्र च सेति विशदं विविच्यताम्.**

'गौर्वाहीकः' इत्यत्र कथं गोशब्देन वाहीकार्थो बोध्येत इत्यत्र सन्ति वादिनां विप्रातिपत्तयः। तत्र मतत्रयमत्र प्रदर्श्यते-

'अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्ति' इति केचित्।

अयं भावः अत्र केचिदाचार्या वदन्ति 'गौर्वाहीकः' इत्यत्र गोसहचारिणी ये जाड्यमान्द्यादयो गुणास्ते लक्षणया बोध्यन्ते। लक्षिताश्च ते गुणा गोशब्दस्य वाहीकार्थाभिधाने (अभिधया बोधने) प्रवृत्तिनिमित्तत्वमुपयान्ति।

परं तेषामिदं कथनं नितरामसङ्गतम् गोशब्दस्यागृहीतसङ्केतं वाहीकार्थमाभिघातुमसामर्थ्यात्। गोशब्दमात्रबोधनाच्चाभि धाया विरतत्वाद् विरतायाश्च पुनरुत्थानासम्भवात्। 'शब्दबुद्धिकर्मणां विरम्य व्यपाराभावः' इति नियमात्।

अन्ये पुनः 'स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते न परार्थोऽभिधीयते' इति वदन्ति।

अर्थात् - अन्ये आचार्याः कथयन्ति यद् गोशब्देन वाहीकार्थो नाऽभिधीयते, किन्तु स्वार्थसहचारिगुणसाजात्येन वाहीकार्थगता गुणा एव लक्ष्यन्ते, इति। तथा गोगतजाड्यवान् वाहीक इति बोधः।

तदप्यपरे न क्षमन्ते। तथा। हि गोशब्दाद् वाहीकार्थः प्रतीयते न वा? प्रतीयते इति चेद् गोशब्दादेव वा?

लक्षिताद्वा गुणादविनाभावाद्वारा? तत्र न प्रथमः। वाहीकार्थस्याऽसङ्केतितत्वात्। न द्वितीयः। अविनाभावलभ्यस्यार्थस्य शब्देऽन्वये प्रवेशाऽसम्भवात्। 'शाब्दी ह्याकाङ्क्षा। शब्देनैव पूर्यते' इति नियमात्। न द्वितीयः। यदि गोशब्दाद् वाहीकार्थो न प्रतीयते, तदास्य वाहीकशब्दस्य च सामानाधिकारण्यमसङ्गतं स्याद् इति। तस्मात्-

साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यते इत्यपरे।

अर्थाद् - अपदे - स्वीयाः अत्मापक्षीयाः साहित्यिका वदन्ति यद् गोशब्दो मुख्यया वृत्त्या वाहीकशब्देन सह अन्वयमलभमानः अज्ञत्वादिसाधर्म्यसम्बन्धाद् वाहीकार्थं लक्षयति। वाहीकस्याज्ञत्वाद्यतिशयबोधनं प्रयोजनम्। इयं च गुणयोगाद् गौणीत्युच्यते। उक्तं च कुमारिलभट्टनिर्मिते वार्तिके-

'मानान्तरविरुद्धे तु मुख्यार्थस्य परिग्रहे।
अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता'।।

मुख्यार्थस्य परिग्रहे = स्वीकारे, मानान्तरेण = प्रत्यक्षादिना, विरुद्धे सति या अभिधेयेन = वाच्येन, अविनाभूतं = सम्बद्धं तटादि, तस्य प्रतीतिः = प्रतीतिकरणभूतो व्यापारः, सा लक्षणेत्युच्यते। सा च लक्ष्यमाणा ये गुणाः ते गुणाः तैः योगे = शक्यसम्बन्धे सति, गौणीलक्षणेत्युच्यते। अत्र चाऽविनाभावः = सम्बन्धकत्वम्, न तु नान्तरीयकत्वम् = व्याप्तिरित्यर्थः। नान्तरीयकत्वे हि 'मञ्चाः क्रोशन्ति' 'गिरिर्दह्यते' इत्यादौ लक्षणा न स्यात्। अर्थात् 'मञ्चा क्रोशन्ति' इत्यादौ मञ्चानामचेतनत्वेन क्रोशनस्याऽसभ्भवे तत्सिद्ध्यर्थं मञ्चपदस्य मञ्चस्थाबालके लक्षणा स्यात्। मञ्चस्य भूतलवृत्तितया मञ्चस्थस्य बालकस्य मञ्चस्थतया दैशिकव्याप्तेरभावात्। मञ्चस्थं विनापि मञ्चप्रतीतेः कालिकव्याप्तेरप्यभावात् ननु क्रोशनकाले व्याप्तिरस्त्येवेत्यत आह अविनाभावे। व्याप्तौ सत्यां तु आक्षेपेणैव अनुमानादिनैव मञ्चस्थप्रतीतौ लक्षणोच्छेद एव स्यादिति।

**'मुखं विकसितस्मितम्' इत्याद्युदाहरणे तत्तल्लक्ष्यव्यङ्ग्यमर्थजातां प्रपञ्चचयत।**

'मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितम् समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः।
उरो मुकुलितस्तनं जधनमंसबन्धोद्धुरम्, बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते'।।

गूढव्यङ्ग्ये लक्षणामूलध्वनेरुदाहरणमिदम्। तरुणिमोद्गमः = तारुण्याविर्भावः मोदते = स्फीतो भवति। बतेति हर्षे, खेदे, विस्मये वा। तदेव दर्शयति मुखं विकसितस्मितम् - विकसितं = प्रसृतं स्मितं यत्र तथाभूतम्। एवं प्रेक्षितम् = प्रेक्षणम्, अवलोकनमित्यर्थः। वशितवक्रिमः - वशितः = वशीकृतः, वक्रि = तिर्यग्गामित्वं येन तथाभूतम्।

तथा गतिः = गमनम्, समुच्छलितविभ्रमा = समुच्छलिताः निरन्तरमतिशयेन वा प्रादुर्भूताः, विभ्रमाः हावभेदाः, यस्यां तथाभूता। तथा मतिः = बुद्धिः। अपास्तसंस्था = त्यक्तमर्यादा, अनेकविषयसञ्चारिणीति यावत्। तथा उरः= वक्षःस्थलम्, मुकुलितस्तनम् - मुकुलितौ, मुकुलाकारौ स्तनौ यत्र तादृशम्। जधनम् = ऊरुमूलभागः अंसबन्धाद्धुरम् - अंसबन्धेन अवयवानां हढबन्धेन, उद्धुरं = विलक्षणरतियोग्यम्।

अत्र विकारस्य पुष्पधर्मस्य स्मिते बाधाद् विकासेन असङ्कुचितत्वसम्बन्धेन प्रसृतं सातिशयं च लक्ष्यते, सौरभादिव्यङ्ग्यम्। एवं वशीकणस्य चेतनधर्मस्य प्रेक्षिते बाधात्, वशीकरणेन अभिमतविशेषप्रवृत्तिसम्बन्धेन स्वाधीनत्वं लक्ष्यते, युक्तानुरागित्वं व्यङ्ग्यम्। ऊर्ध्वगतिरूपसमुच्छलनस्य मूर्तद्रवधर्मस्य विभ्रमे बाधात् समुच्छलनेन प्रयोज्यप्रयोजकभावसम्बन्धात् बाहुल्यं लक्ष्यते सकलमनोहारित्वं व्यङ्ग्यम्। संस्थायाः = मर्यादायाः, त्यागस्य चेतनधर्मस्य मतौ बाधात्, संस्थाऽपासनेन हेतुहेतुमद्भावसम्बन्धात् अधीरत्वं लक्ष्यते अनुरागातिशयो व्यङ्ग्यः। मुकुलितत्वस्य पुष्पधर्मस्य स्तनयोः बाधात् मुकुलितत्वेन निबिडावयवसम्बन्धात् काठिन्यं लक्ष्यते, आलिङ्गनयोग्यत्वं व्यङ्ग्यम् उद्धुरस्त्वस्योत्कृष्टधुरावत्त्वरूपस्य चेतनधर्मस्य जधने बाधात्, उद्धुरत्वेन भारसहनक्षमत्वसम्बन्धात्, विलक्षणरतियोग्यतेवं लक्ष्यते, रमणीयत्वं व्यङ्ग्यम्। मोदस्य चेतनधर्मस्य यौवनोद्गमे बाधितत्वात् मोदेन जन्यजनकभावसम्बन्धात् उत्कर्षो लक्ष्यते, स्पृहणीयत्वं व्यङ्ग्यम्। अत्रैतानि व्यङ्ग्यानि काव्यवासनापरिपक्वबुद्धेः सहृदस्यैव प्रकाशन्ते, इति गूढानि। अतो गूढव्यङ्ग्यमिदं काव्यम्।

**लक्षणामूला व्यञ्जना**

अथ व्यञ्जकशब्दलक्षणाय व्यञ्जना निरूपणीया। सा च द्वेधा शब्दनिष्ठा अर्थनिष्ठा च। तत्र शब्दलक्षणो अर्थनिष्ठायाः नावसरः अनुपयुक्तत्वात्। शब्दनिष्ठा चापि द्विविधा - अभिधामूला लक्षणामूला चा। तत्र यद्यपि अभिधायाः प्राथम्याद् उपजीव्यत्वाच्य अभिधामूला प्रथमं निरूपयितुमुचिता तथापि सुप्रसिद्धत्वात् लक्षणायाः प्रयोजननिर्वाहकतया सुबोधत्वात् प्रकृतत्वाच्च प्रथमं लक्षणामूलमेव निरूपयति - 'तत्र व्यापारो व्यञ्जनात्मकः' इति। तत्र = लाक्षणिके शब्दे, व्यापारः = व्यङ्ग्यप्रकाशानुकूलः, व्यञ्जनात्मक इत्यर्थः।

'न हि प्रतिज्ञामात्रेणार्थसिद्धिः' इत्यत आह। अथवा-ननु लक्षणादिनैव व्यङ्ग्यस्यापि प्रतीतिर्भविष्यति किं व्यञ्जनेत्यत आह-

'यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते। फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया।।' इति।

अर्थात् - यस्य शैत्यपावनत्वादिरूपफलस्य, प्रतीतिम् अनुभवम् आधातुं = जनयितुं, लक्षणा = लाक्षणिकः लाक्षणिकशब्दपरम्। 'लक्षणया शब्दप्रयोगः' इति वृत्तिग्रन्थास्वारस्यात्। समुपास्यते = वाचकशब्दं विहाय आद्रियते। शब्दैकगम्ये = लाक्षणिकशब्दमात्रबोध्ये न तु अनुमानादिगम्ये इत्यर्थः। अत्र - फले, शैत्यपावनत्वादिप्रयोजनविषये व्यञ्जनात् = व्यञ्जनां विहाय, अपरा क्रिया = अन्यो व्यापारो नास्तीत्यर्थः। किन्तु व्यञ्जनात्मक एव व्यापार इति भावः। एवं लाक्षणिके शब्दे प्रयोजनबोधक्षमो व्यञ्जनाभिधो व्यापारः।

ननु अभिधया लक्षणया वा प्रयोजनरूपव्यङ्ग्यस्य प्रतीतिर्भविषयति व्यञ्जनयेत्यपि न वक्तव्यम्। सङ्केताभावात्, नाभिधा, हेत्वभावाच्य न लक्षणा प्रयोजनरूपव्यङ्ग्यं प्रतिपादयितुं समर्थेत्यवश्यं तत्प्रतिपत्त्यर्थं व्यञ्जना स्वीकर्तव्या एवेति दिक्।

**हेत्वभावान्न लक्षणा इत्यस्य कः आशयः।**

**अथवा**

**लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो। न प्रयोजनमेतस्मिन् न च शब्द स्खलद्गतिः।।'**

**इति कारिका सप्रसङ्गं व्याख्येया।**

ननु 'गङ्गायां धोषः' इत्यादौ गङ्गदि शब्दस्य तीरादौ लक्षणायां सत्यां पुनर्गङ्गादिशब्दस्य शैत्यपावनत्वाद्यर्थेऽपि लक्षणैवास्तु किं प्रयोजनं व्यञ्जनयेति चेत्। उत्तरयति-

हेत्वभावान्न लक्षणा इति लक्षणायाः किल मुख्यार्थबाधः, मुखार्थयोगः रूढिप्रयोजनाऽन्यतरच्चेति त्रयं हेतुः। अत्र हेतुरिति फलोपहितपरमैकवचनम् स्वरूपयोग्यता तु प्रत्येकमेवेति बोध्यम्। तथा च हेतुत्रयाभावात् न लक्षणा भवितुमर्हति। तदेवाह-

'लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो। न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः।।' इति

'गङ्गायां धोषः? इत्यत्र गङ्गाशब्दस्य प्रवाहो मुख्योऽर्थः, तद्बाधञ्च तीरेण सह तस्य सामीप्यसम्बन्धोऽप्यस्ति। तथा च तीरस्य लक्षणयोपस्थाने शैत्यपावनत्वप्रयोजनमस्ति। एवं हेतुत्रये सत्येव गङ्गाशब्दः तटं लक्षयति। एवमेव यदि शैत्यपावनत्वादिकं प्रयोजनमपि लक्षयेत् तदा हेतुत्रयवश्यमेव भवितव्यम्, न चास्ति। तथा हि - यदि शैत्यपावनात्वादिकं प्रयोजनं लक्ष्यं स्यात् तदा तटो मुख्योऽर्थो भवेत्, तस्य च बाधोऽपि स्यात्। अपि च तस्य तटस्य लक्षणीयेन शैत्यपावनत्वादिना प्रयोजनने सम्बन्धोऽपि स्यात्। एतच्च न किमप्यस्ति। तथा हि तक्ष्यं तटं गङ्गाशब्दस्य मुख्योऽर्थः। नाप्यत्र लक्ष्ये तटे घोषाधिकरणत्वासम्भवरूपो बाधः। तटस्य घोषाधिकरणत्वस्य सत्वात्। अपि च , फलेन = प्रयोजनेन शैत्यपावनत्वादिना सह तटस्य साक्षात् सम्बन्धोऽपि नास्ति। शैत्यपावनत्वादेः प्रवाहसमवेतत्वादित्यर्थः। साक्षात् सम्बन्ध एव लक्षणायाः प्रयोजकम्। अपि च, एतस्मिन् प्रयोजने लक्षयितव्ये अन्यप्रयोजनमपि नास्ति। प्रयोजनेऽपि प्रयोजनान्तरमित्यनवस्थापत्तिरिति भावः अपि च प्रयोजने शब्दः लाक्षणिकशब्दः स्खलद्गति नः। गङ्गादिशब्दः प्रयोजनप्रतिपादनविषये प्रस्तुतसामर्थ्यो न। अपितु तस्मादेव शब्दात् प्रयोजनं लक्ष्येत।

अयं भावः - गङ्गाशब्दात् पावनत्वादिप्रयोजनं न प्रतीयते इति न, किन्तु प्रतीयत एव। तथा चाभिधालक्षणाभ्यामनिर्वाहे व्यञ्जनारूपं वृत्त्यन्तरमेव स्वीकार्यमिति पर्यवस्यति।

**'प्रयोजनेन सहितं लक्षणीयं न युज्यते।**

**ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्।।'**

**प्रत्यक्षादेर्नीलादिविषयः फलं च प्रकटता संवित्तिर्वा।' इत्यादिपङ्क्तयो व्याख्येयाः।**

ननु न केवलं प्रयोजनं लक्ष्यते, किन्तु प्रयोजनसहितं तटादिकं लक्ष्यते, इति न दोषः किञ्च 'गङ्गायास्तटे धोषः' इति प्रयोगाऽपेक्षया 'गङ्गायां धोषः' इत्यनेन पावनत्वादिवैशिष्ट्यरूपस्य प्रतीतिः प्रयोजनम् (फलम्), इति पावनत्वादियुक्ते (विशिष्टे) लक्षणा, तत्किं व्यञ्जनेत्याह - 'प्रयोजनेन सहितं लक्षणीयं न युज्यते इति।

तथा सति लक्षणाजन्यज्ञानस्यैव फलज्ञानात्मकत्वात् लक्षणाजन्यज्ञानफलत्वं न स्यादित्याह-

'ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्' इति।

तथा च यथा ज्ञानस्य विषयः ज्ञानाद् अन्यः, तथा ज्ञानस्य फलमपि ज्ञानादन्यत् फलफलिनोः समसमयोप्यादासम्भादिति। "प्रत्यक्षादेर्नीलादिविषयः, फलं तु प्रकटता संवित्तिर्वा।"

अयं भावः - 'अयं घटः' इति धटज्ञानानन्तरं 'ज्ञातो मया घटः' इति प्रत्ययात् तज्ज्ञाने तस्मिन् घटे ज्ञातताऽपरनाम्नो प्रकटता जायते, इति मीमांसकानां विचारः, एवं ज्ञेयधर्मः प्रकटया, पूर्वमीमांसकैः प्रत्यक्षादिज्ञानस्य फलमित्युच्यते इति।

तार्किकमते तु - 'अयं घटः' घटज्ञानानन्तरं 'घटमहं जानामि' इति प्रत्ययरूपा, अनुव्यवसायापरपर्याया संवित्तिः जायते। एवं ज्ञातृधर्मः संवित्तिस्तार्किकैः प्रत्यक्षादिज्ञानस्य फलमित्युच्यते इति भावः। यथा कारणत्वेन ज्ञानाद् विषयो भिद्यते तथा कार्यत्वेन फलमपीत्यर्थः। अन्यथा तीरत्वपावनत्वज्ञानयोरभेदे जन्यजनकभावाऽनुत्पत्तिरिति भावः।

एवं च लक्षणाजन्यज्ञानविषयत्वेन तत्फलस्य शैत्यपावनत्वादेः लक्षणाविषयत्वं न युक्तमिति भावः। एवं विशिष्टे लक्षणा न कर्तुं शक्यते, इति दिक्।

**संयोगो विप्रयोगश्च इत्यादिकारिकार्थं निरूपयत**

नानार्थकस्य शब्दस्य एकत्रार्थेऽभिधया नियमेन संयोगादयो हेतवो भवन्ति। यथा चाह (भर्तृहरिः)-

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता। अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।।

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः। शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।।

एते संयोगादयः शब्दवाच्यार्थस्य अनिश्चये सति तदपाकरणद्वारेण विशेषज्ञानजनका भवन्ति। तेषां क्रमेणोदाहरणानि प्रदीयन्ते - तत्र संयोगः प्रसिद्धसम्बन्धः। यथा 'सशङ्खचक्रो हरिः' इति।

अत्र - 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहाशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु।।'

इत्यमरकोशाद् अनेकार्थस्य हरिशब्दस्य वाचकत्वं शङ्खचक्रयोगेन अच्युते विष्णौ नियम्यते। विप्रयोगस्तावत् प्रसिद्धसम्बन्धध्वंसः। यथा - अशङ्खचक्रो हरिः' इति। संयोगपूर्वकत्वात् ध्वंसस्य विषयोरन्यत्र शङ्खादिध्वंसाभावात् अनेकार्थस्य हरिशब्दस्य वाचकत्वं शङ्खचक्रवियोगेन अच्युते नियम्यते। साहचर्यं = सहचरता। यथा - 'रामलक्ष्मणौ' इति। अत्र-

'रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे। राधवे चासिते श्वेते मनोज्ञेऽपि च वाच्यवत्।'

इति विश्वकोशात् रामशब्दोऽनेकार्थकः। एवमेव सारसदुर्योधनपुत्रादौ प्रसिद्धत्वात् लक्ष्मणशब्दोऽपि अनेकार्थकः। किन्तूभयोः शब्दयोर्वाचकत्वं साहचर्येण दाशरथौ नियम्यते। विरोधिता- वैरम्। बध्यघातकत्वमित्यर्थः। यथा - 'रामार्जुनगतिस्तयोः' इति। अत्र विरोधित्वात् रामो भार्गव एव न तु दाशरथ्यादिः, तद् वध्यत्वाच्य अर्जुनः कार्तवीर्य एव न तु पाण्डवादिः। अर्थः = प्रयोजनम्। यथा- 'स्थाणुं भज भवच्छिदे' इति। अत्र 'स्थाणुर्वा न ध्रुवः शङ्कुः' इति 'स्थाणू रुद्र उमापतिः' इति चाऽमरकोशाद् अनेकार्थस्य स्थाणुशब्दस्य वाचकत्वं भवच्छेदनरूपेण फलेन (अर्थेन) हरे - शिवे नियम्यते। राजैवात्र युष्मदर्थः, बुद्धिस्थत्वात्। लिङ्गं = संयोगातिरिक्तसम्बन्धेन परपक्षवृत्तो धर्मः, असाधारणे धर्म इति वा। यथा - 'कुपितो मकरध्वजः' इति। अत्र समुद्रकामाद्यनेकार्थकः मकरध्वजशब्दः कोपरूपचेतनधर्मसम्बन्धात् कामे नियम्यते। अन्यशब्दसन्निधिर्यथा-देवस्य पुरारातेः' इति। अत्र राजाद्यर्थकत्वात् नानार्थकस्य देवपदस्य वाचकत्वं शम्भुभिन्नस्य देवपदार्थस्य पुरारातित्वासम्भवात् पुरारातिशब्दसमभिहारेण शम्भौ शिवे नियम्यते। सामर्थ्यं= नियतशक्तिः। यथा - 'मधुना मत्तः कोकिलः' इति। अत्र

'मधु पुष्परसे क्षौद्रे मद्ये ना तु मधु द्रुमे। वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति।"

इति मेदिनीकोशाद् अनेकार्थस्य मधुशब्दस्य वाचकत्वं सामर्थ्येन वसन्ते नियम्यते। वसन्ताद् अन्यस्य मधुशब्दार्थस्य कोकिलमादनसमर्थत्वेनाऽप्रसिद्धत्वात्। औचिती = योग्यता। यथा- 'पातु वो दयितामुखम्' इति। अत्र

'मुखं निःस्सरणे वक्त्रे प्रारम्भोपाययोरपि। सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्।।'

इति मेदिनीकोशाद् वदनसाम्मुख्योपायादौ शक्तत्वान्नानार्थकस्य मुखशब्दस्य वाचकत्वम् अत्कण्ठितमनोरथसाधनौचित्येन साम्मुख्ये नियम्यते। देशः = स्थानम्। यथा - 'भात्यत्र परमेश्वरः' इति। अत्र विष्णुशिवादौ शक्तत्वेनाऽनेकार्थस्य परमेश्वरशब्दस्य वाचकत्वम्, अत्रेति राजधानीरूपदेशेन राजनि नियम्यते। कालः समयः। यथा 'चित्रभानुर्विभाति' इति सूर्याग्निरूपाऽनेकार्थस्य चित्रभानुपदस्य वाचकता दिने प्रयोगे सति रवौ = सूर्ये नियम्यते, रात्रौ प्रयोगे सति वत्ने = अग्नौ, नियम्यते। व्यक्तिः = लिङ्गम्, स्त्रीपुंस्त्वादि। यथा-मित्रं भाति' अत्र 'मित्रं सुहृदि मित्रोऽर्कः' इति कोशाद् अनेकार्थस्य मित्रशब्दस्य वाचकत्वं नपुंसकलिङ्गव्यक्त्या सुहृदि, 'मित्रो भाति इति पुल्लिङ्गव्यक्त्या स्वौ = सूर्ये नियम्यते। 'इन्द्रशत्रुः' इत्यादौ स्वरस्तु वेदे एव विशेषप्रतीतिकृत् न काव्ये। अन्यथा, श्लेषभङ्गप्रसङ्गः स्यात्। आदिशब्दात् अभिनयादयः। यथा-

'एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम्। एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः'।। इति।

इत्यादौ हस्तचेष्टादिभिः स्तनादीनां कमलकोरकाद्याकारत्वं द्योत्यते।

**तद्युक्तो व्यञ्जकः शब्दः यत्सोऽर्थान्तरयुक् तथा। अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः।।**

**इति कारिका सम्यग्व्याख्येया।**

व्यञ्जनां निरूप्य तद्द्वारा व्यञ्जकशब्दं निरूपयति-

तद्युक्तो व्यञ्जकः शब्दः इति।

अर्थात् - व्यञ्जनयुक्तः शब्दो व्यञ्जकः इति तात्पर्यम्।

ननु 'भद्रात्मनः' इत्यादौ शब्दमात्रस्य व्यञ्जकत्वे शब्दार्थोभयरूपस्य काव्यस्य व्यञ्जकत्वाभावात् कथं ध्वनिमित्यत आह-

'..... यत्सोऽर्थान्तरयुक् तथा। अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः।।' इति यत् = यस्मात् कारणात्, सः शब्दः, अर्थान्तरयुक् - अर्थस्य - स्वशक्यप्रकृतार्थस्य, अन्तरं = व्यवधानम्, तेन युक् = युक्तः सन्, तथा व्यञ्जको भवति। अतः तत्र काव्ये, अर्थोऽपि = स्वशक्यप्रकृतार्थोऽपि, सहकारितया = विशेषणीभावेन अप्रधानतयेति भावः। व्यञ्जको मतः सम्मत इत्यर्थः। स्वशक्यप्रकृतार्थबोधनानन्तरमेव व्यङ्ग्यार्थबोधाद् अर्थस्य सहकारित्वमिति भावः।

**आर्थीव्यञ्जनां निरूप्य वक्तृबोद्धव्योः विशिष्टयाद् अन्यर्थप्रतीतिर्यथा भवति तथा विशदीक्रियताम्**

वक्त्रादिवैलक्ष्यहेतुका। या प्रतिभाशालिनां वाच्यलक्ष्यान्यर्थप्रतीतिः तद्धेतुव्यपार आर्थी व्यञ्जना। उक्तं च मम्मटेन 'वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः। प्रस्तावदेशकालादेर्वौशिष्ट्यात् प्रतिभाजुषाम्।'

'योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा।।' इति।।

तत्र वक्ता कवि। तन्निबद्धो नायकादिश्च। तत्र वक्तृवैशिष्टयात् वाच्यस्य व्यञ्जकत्वं यथा

'अतिपृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखी त्वारितम्। श्रमस्वेदसलिलनिःश्वासनिः सहा विश्राम्यामि क्षणम्।।'

जलाहरणवर्त्मनि नदीगहने उपनायकोपभुक्तायाः घर्मजलनिःश्वासाद्युपभोगचिह्नेन उपभोगं सम्भावयन्तीं सखीं सम्बोध्य कस्याश्चिदुक्तिरियम्। अत्र प्रमाणान्तरेणाऽसतीत्वेऽवगते सति व्यभिचारिणी वदतीति वक्तृवैशिष्टयात् वाच्यघटितवाक्यार्थस्य चौर्येण कृतं रतं गोपायतीति सामाजिकान् प्रतिभाशालिनः प्रति व्यङ्ग्यम्। अत्र वक्त्री कामिनी। तस्याः दुःशीलत्वंरूपवैशीष्ट्यं विजानतां चौर्यरतगोपनं व्यक्तीभवति। अत्र शब्दपरिवृत्तिसहत्त्वात् अर्थस्यैवेयं वृत्तिरिति

बोधनीयः पुरुषो बोद्धव्यः। बोद्धवैशिष्ट्याद् वाच्यस्य व्यञ्जकत्वं यथा।-

'औन्निद्र्यं दौर्बल्यं चिन्ताऽलसत्वं सनिःश्वसितम्। मम मन्दभागिन्याः कृते सखि त्वमपि अहह परिभवति।।'

अत्र दूती बोद्धव्या। तस्या अन्यथाऽपि दृष्टदुश्चेष्टाया वैशिष्ट्याद् वाच्यधटितवाक्यार्थस्य तस्याः स्वकामुकोपभोक्तृत्वमेषा प्रकाशयतीति सामाजिकान् प्रति व्यङ्ग्यमिति भावः।।

**'तथाभूतां दृष्ट्वा' इत्याद्युदाहरणे कथन्न काकोर्वाच्यसिद्धद्ध्यङ्गत्वमित्युत्तरयत**

कायति अर्थान्तरमिति काकु = ध्वनेर्विकारः। तदुक्तम् - भिन्नकण्ठध्वनिधीरैः काकुरित्यभिधीयते' इति। तद्वैशिष्ट्यात् वाच्यस्य व्यञ्जकत्वं यथा-

'तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां, वने व्याधौः सार्धं सुचिरमुषितं वल्कलधरैः।

विराटस्यावासे स्थितमनुचितारम्भनिभृतं, गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु।।'

वेणीसंहारे प्रथमाङ्के कुरुनिग्रहानुद्यमेन युधिष्ठिरमुपलम्भमानं भीमं प्रति सहदेवस्य 'आर्य! कदाचित् खिद्यते गुरुः' इत्युपालम्भनिषेधपरवाक्यस्योत्तरे 'गुरुः किं खेदमपि जानाति' इत्युपक्रम्य भीमसेनोक्तिरियम्। अत्र नञि काकुः। तद्वैशिष्ट्यात् 'मयि न योग्यः खेदः (मात्सर्यम्) कुरुषु तु योग्यः' इति प्रकाश्यते व्यज्यते इत्यर्थः।

ननु पात्रापात्रवैपरीत्येन खेदस्य करणाऽकरणरूपवाक्यार्थस्य, अयुक्ततयाऽपर्यवसन्नस्य पर्यवसानरूपसिद्ध्यै व्यङ्ग्योपस्थानद्वारा काकुरेव प्रभवतीति काकोर्वाच्यसिद्ध्यङ्गत्वे तद्द्वारीभूतस्य व्यङ्ग्यस्यापि ाथात्वेन गुणीभूततया 'मथ्नामि कौरवशतं समरे न कोपात्' इत्यादिवद् गुणीभूतव्यङ्ग्यस्येदमुदाहरणं न तु ध्वनेरिति चेत्? न। न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यम्। प्रश्नमात्रेणापि काकोविश्रान्तेरिति।

वाच्यस्य वाक्यार्थस्य भ्रातरि खेदभजनरूपस्य कुरुषु तदभजनरूपस्य चेत्यर्थः। सिद्धिः पर्यावसानम्, तदङ्गम् = तत्कारकमित्यर्थः। अतो गुणीभूतव्यङ्गत्वं न शङ्ग्यमिति सम्बन्धः। काकुव्यङ्ग्येन प्रश्नमात्रेणपि वाच्यार्थस्य पर्यवसानादित्यर्थः।

अयमत्राभिसन्धिः - अत्र काकोर्वाच्यसिद्ध्यङ्गत्वं न व्यङ्ग्यार्थाक्षेपद्वारा, अपितु न भजति इति प्रश्नमात्रोपस्थानद्वारैव। तेन हि वाक्यार्थे पर्यवसन्ने सति व्यङ्ग्यप्रतीतिरिरिति कुतो गुणीभूतव्यङ्ग्यत्वशङ्का। 'मथ्नामि कारवशतम् इत्यत्र प्रतिज्ञातकूरुकुलक्षयस्य भीमस्य 'न मथ्नामि' इत्युक्तेर्बाधितत्वाद्पर्यवसन्नस्य वाक्यार्थस्य पर्यवसानरूपसिद्ध्यै मथ्नाम्येवेति व्यङ्ग्योपस्थानद्वारा काकुरेव प्रभवतीति काकोर्वाच्यसिद्ध्यङ्गत्वे तद्भारीभूतस्य व्यङ्ग्यार्थस्यापि तथात्वेन गुणीभूतया गुणीभूतव्यङ्ग्यत्वमेव।

**शब्दप्रमाणवेद्योऽर्थे व्यनक्त्यर्थान्तरं यतः। अर्थस्य व्यञ्जकत्वे तत् शब्दस्य सहकारिता।' इति कारिकां विवृणुत**

ननु 'अर्थव्यञ्जकतोच्यते' इति सूत्रेणार्थमात्रस्य व्यञ्जकत्वे शब्दार्थोभयरूपस्य काव्यस्य व्यञ्जकत्वाभावात् कथं ध्वनित्वमिति चेत्? उच्यते-

'शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः।

अर्थस्य व्यञ्जकत्वे तत् शब्दस्य सहकारिता'।।

यतः = यस्मात्, शब्दरूपप्रमाणेन, वेद्यः = प्रतिपादितः, अर्थः = वाच्यलक्ष्यव्यङ्ग्यरूपः, अर्थान्तरं = व्यङ्ग्यलक्षणम्, अन्यम् अर्थं व्यनक्ति = प्रकाशयति, तत् = तस्मात् कारणात्, अर्थस्य व्यञ्जकत्वे = अर्थशक्तिमूले ध्वनौ, शब्दस्य सहकारिता विशेषणीभाव इत्यर्थः। अर्थस्य प्रधान्येन व्यञ्जकत्वेऽपि व्यञ्जकोऽर्थः स्वयं शब्दप्रमाणमवेद्य एव न तु प्रमाणान्तरगम्यः, इति शब्दान्वयव्यतिरेकानुविधायित्वात् शब्दोऽपि व्यञ्जकत्वे निमित्तम्। किन्तु पर्यायान्तरेणापि तदुपस्थितौ व्यङ्ग्यप्रतीतेः शब्दस्याऽप्रधानताऽर्थस्य च प्राधान्यमिति तन्मुखेन व्यपदेशः। 'प्रधान्येन व्यपदेशा भवन्ति' इति न्यायादिति भावः।

## 'अविवक्षितवाच्यो यः' इत्यादि कारिका सोदाहरणं व्याख्येया

काव्यस्य त्रिषु भेदेषु ध्ववनिरूपं काव्यं द्विविधम् - लक्षणामूलकम् अभिधामूलकं चेति। तत्राद्यम् - अविवक्षितवाच्यम्, अन्त्यं विवक्षिताऽन्यपरवाच्यम् इत्युच्यते। प्रथमं लक्षणामूलकं लक्षयित्वा विभजते आचार्यो मम्मटः-

'अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ। अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम्।। इति।

लक्षणामूलव्यङ्ग्यप्रधान्ये सत्येव, अविवक्षितवाच्यं यत्र स ध्वनिः स च अर्थान्तरसङ्क्रमितवाच्यः अत्यन्तानिरस्कृतवाच्यश्च, इति द्विविधः। तत्र ध्वनौ वाच्यं क्वचिद् अनुपयुज्यमानतया = यद्रूपेण वाच्यं तद्रूपेण प्रकृताऽन्वयेऽनभिप्रेतत्वात् अर्थान्तरे= अन्यप्रकारेण वाच्यलक्ष्यसाधारणेऽर्थे परिणमितम् = परिणमितमिवेत्यर्थः। यत्र वाच्योऽपि प्रकारान्तेरण लक्ष्य इति भावः। यथा - काकेभ्यो दधि रक्ष्यताम्' इत्यादौ वाच्योऽपि काकः, दद्युपघातकरूपेण लक्ष्यः। अयं च उपादानलक्षणास्थले एव सम्भवतीति। वेदितव्यम्। उदाहरणं यथा -

'त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्।।'

विद्वत्सभां गच्छन्तं प्रति कस्यचिदाप्तस्य उक्तिरियम्। 'यत्' इत्यध्याहार्यम्। यतोऽत्र विदुषाम् = असाधारणज्ञानवताम्, समवायः = एकवाक्यताऽऽपन्नः समुदायः, तिष्ठति, तत् = तस्मात् कारणात्, आत्मीयां = स्वकीयाम्,मतिम् आस्थाय = अवलम्ब्य, अत्र सभायाम्, स्थितिं = सावधानस्थितिम् विधेहि = कुरु। इति त्वाम् = उपदेशार्हम्, अस्मि = आप्तोऽहम्। वच्मिः = उपदिशामीत्यर्थः।

अत्र सम्बोध्यमुद्दिश्य वक्तव्यकथनेनैव सिद्धे पुनः 'त्वामस्मि वच्मि' इति कथनम् अनुपयुक्तमिति, त्वाम् = उपदेश्यं त्वाम्, अस्मि = आप्तोऽहम्, वच्मि = उपदिशामि, इति लक्ष्यम्। तेन हितसाधनत्वम् इति व्यङ्ग्यम्।

एवं विद्वत्पक्षेऽपि 'विदुषाम्' इति आत्ममतेः सार्वकालिकत्वेऽपि 'आत्मीयाम्' इति च, यथाक्रमं सर्वशास्त्रविशारदरूपेण प्रमाणपरतप्रन्त्रतया च परिणतम्। तेन चऽन्यथाचरणे उपहसनीयत्वं व्यङ्ग्यम्।

क्वचिच्च अनुपपद्यमानतया = प्रकृतान्वयाऽनुपयोगितया, वाच्यम् अत्यन्तं तिरस्कृतम् = इतरार्थमात्रलक्षकमित्यर्थः। अन्यन्ततिरस्कृतवाच्यो यथा-

'उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे सुखितमास्व ततः शरदां शतम्।।'

बहुभिरूपकारस्तप्यमानस्य कस्यचिदुक्तिरियम्। तत उपकृतादयः शब्दाः, अपकारिणं प्रति अन्वयम्

तत्र रसस्याङ्गत्वे रसवदलङ्कारः, भावस्याङ्गत्वे प्रेयोऽलङ्कारः, अलभमाना बाधितस्वरूपाः सन्तः, उपकृतम् अपकृतम्, सुजनता, दुर्जनता, सखे शत्रो सुखितं दुःखितम्, इति विपरीतार्थान् लक्षयन्ति। अपकाराद्यतिशयो व्यङ्ग्यः। अत्र मुख्यार्थस्य सर्वथा - त्यागदेवाऽत्यन्ततिरस्कृतवाच्यत्वमिति। अयं च लक्षणलक्षणास्थले एव सम्भवतीति बोध्यम्।

**विवक्षितान्यपरवाच्यध्वनेः भेदयोः अलक्ष्यक्रमव्यङ्ग्यध्वनेः भेदान् लिखत। अथवा अभिधामूलव्यङ्ग्यध्वनेःस्वरूपं निरूपयत ।**

'विवक्षितं चाऽन्यपरं वाच्यं यत्रापरस्तु सः।'

यत्र - यस्मिन् ध्वनौ, वाच्यं - वाच्योऽर्थः, विवक्षितं - वाच्यताऽवच्छेदकरूपेणान्वयबोधविषयः, अन्यपरं च - व्यङ्ग्योपसर्जनीभूतं च, सः, अपरः - विवक्षिताऽन्यपरवाच्यध्वनिरित्युच्यते इत्यर्थः। स च द्विविधः असंलक्ष्यक्रमव्यङ्ग्यः, संलक्ष्यक्रमव्यङ्ग्यश्चेति। उक्तं च।

कोऽप्यलक्ष्ययक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः इति। अलक्ष्येति न खलु विभावानुभावव्यभिचारिणा एव रसः, अपितु रसस्तैरिति क्रमोऽस्त्येव किन्तु लाघवान्न लक्ष्यते। तत्र अलक्ष्यक्रमस्तु-।

'रसभावतदाभासभावशन्त्यादिरक्रमः भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थिताः।" इति।

अर्थाद् यत्र रसभावतदाभासभावशान्तिभावेदयभावसन्धिभावशबलताप्रधानतया स्थिताः, सोऽलक्ष्यक्रमव्यङ्ग्यो ध्वनिरिति भावः। अन्यत्र - अर्थाद् गुणीभूतव्यङ्ग्ये, प्रधाने रसान्तरेऽङ्गिनि यत्राङ्गभूतः

(उत्कर्षकः) रसादिः, तत्र गुणीभूतव्यङ्ग्यस्थले 'अयं स रशनोत्कर्षी' इत्यादौ प्रधाने करुणादौ वाक्योद्देश्येऽङ्गं स्मर्यमाणः श्रृङ्गारादिरिति तत्र रसवदादयोऽलङ्काराः भवन्ति, उक्तं - 'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः। काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः।'

तत्र रसास्याङ्गत्वे रसवदलङ्कारः, भावस्याङ्गत्वे प्रेयोऽलङ्कारः, रसाभासस्य भावाभासस्य वाऽङ्गत्वे ऊर्जस्वि नामालङ्कारः, भावशान्तेरङ्गत्वे समाहितः, भावोदयादीनां अङ्गत्वे तन्नामान्येवाऽलङ्कारान्तराणि ज्ञेयानि।

**मम्मटोक्तं रसस्वरूपं विशद्यत**

'कारणान्यथ कार्याणि सहकारीणि यानि च। रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः।

विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः, व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः समृतः।। इति।

स्थायिनः = अविच्छिन्नप्रवाहस्य, स्त्यादेः ललनादिविषयकप्रीत्यादेः (चित्तवृत्तिविशेषस्य) लोके = व्यवहारे, यानि कारणानि = ललनादीनि आलम्बनकारणानि, चन्द्रोदयादीनि उद्दीपनकारणानि च। अथ च कार्याणि = रत्यादिजन्यानि कायिक वाचिकमानसिकभेदेन नानाविधानि कटाक्षभुजाक्षेपकाकूक्तिप्रकृतीनि। सहकारीणि = रत्यादेरुक्तकार्यस्य जनने झटिति प्रतीतौ वा सहायकभूतानि निर्वेदादीनि। तानि नाट्यकाव्ययोः चेत् = यदा निबध्यन्ते वर्ण्यन्ते इति भावः। तत् - तदा, क्रमेण विभावः, अनुभावाः, व्यभिचारिणः, इति कथ्यन्ते। कारणानि विभावाः, कार्याणि अनुभावाः, सहकारिणि व्यभिचारिणः, इति कथ्यन्ते। एषां विभावादिसंज्ञा च विभावनादिव्यपारयोगात्। तथा हि - वासनारूपतया, अतिसूक्ष्मरुपेणाऽवस्थितान् स्त्यादीन् स्थानयिः, विशेषेणाऽभिमतः सर्वाङ्गव्यापितया काये चारयन्ति = सञ्चारयन्ति, मुहुर्मुबहुरभिव्यञ्जयन्तीति वा व्यभिचारिणः। तदुक्तम्-

'विशेषादाभिमुख्येन चरणाद् व्यभिचारिणः। स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ।।' इति।

अत एवाऽनित्यत्वादपि व्यभिचारिण एव ज्ञेयम्। अत एवोक्तम्-

'ये तूपकर्तुमायान्ति स्थायिनं रसमुत्तमम्। उपकृत्य च गच्छन्ति ते मता व्यभिचारिणः।।' इति।।

तैः विभावाद्यैः व्यक्तः = व्यञ्जनाख्यवृत्या प्रतिपादितः, सः प्रक्रंस्यमानः, स्थायी = अविच्छिन्नप्रवाहः, भावः = चित्तवृत्तिविशेषः, रसः स्मृतः = ध्वनिकारप्रभृतिभिः कथित इत्यर्थः। चित्तवृत्तिविशेषस्याऽऽशुविनाशित्वेऽपि वासनात्मतया सूक्ष्मरूपेणाऽवस्थानात् स्थायित्वं बोध्यम्। स इत्येव सिद्धे स्थायीत्युक्तिः सञ्चारिणो निरासाय। रतिहासक्रोधादीनां हि करुणश्रृङ्गारादिषु सञ्चारित्वमेव, न तु स्थायित्वम्। सूत्रे तैरित्यनेनैव विभावादिप्रतीतौ विभावाद्यैरिति सहार्थे तृतीया। तेन विभावाद्यैः सह तैर्व्यक्तः इत्यर्थाद् रसस्य समूहालम्बनरूपतालाभः।

'नन्वेवं स्थायिविभावादिसमूहालम्बनात्मिका रसस्य प्रतीतिरिति पर्यवसन्नम्। तच्च न युक्तम्। विभावादीनां पार्थक्येन प्रतीतिप्रसङ्गात्, घटपटाविति सभूहालम्बनवदिति चेत्? न। पानकरसन्यायेन चर्वणात्। 'यथा पानके कर्पूराद्यंशो न पार्थक्येन अनुभूयते तथा विभावाद्यंशः' इति प्रदीपकाराः।

## रससूत्रव्याख्याने भट्टलोल्लटस्य मतं प्रतिपाद्यताम्

'विभावानुभाव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति भरतस्य रससूत्रम्। एतत्सूत्रं भट्टलोल्लटप्रभृतयो मीमांसका इत्थं विवृण्वते-

स्थायिनां विभावैः सह संयोगात् = उत्धाद्योत्पादकभावरूपात् सम्बन्धात् रसनिष्पत्तिः भवति। अनुभावैः सह संयोगात् = गम्यगमकभावरूपात् सम्बन्धात् रसस्य प्रतीतिर्भवति। व्यभिचारिभिः सह संयोगात् = पोष्यपोषकभावसम्बन्धात्, रसस्य निष्पत्तिः = पुष्टिश्च भवति। तथा हि - ललनादिभिरालम्बनविभावैः स्थायी रत्यादिको जनितः, उद्यानचन्द्रिकादिभिः उद्दीपनविभावैः अद्दीपितः, अनुभावैः कटाक्षादिभिः कार्यैः प्रतीतियोग्यः कृतः अभिव्यक्तः, व्यभिचारिभिः निर्वेदादिभिः उपचितः पुष्टीकृतः, मुख्यया वृत्या अर्थात् साक्षात्सम्बन्धेन, अनुकार्ये नाट्येनाऽभिनेये रामादौ नायके, स्थितोऽपि तद्रूपानुसन्धानात् = रामस्येव वेषविशेषवाग्विधायिनि नर्तके काव्यपाठके वा तत्कालं रामत्वाभिमानात् रामत्वारोपाद् वा प्रतीयमानः = सामाजिकैरारोप्यमाणः रसो भवतीति।

अयं भावः - यथा असत्यपि सर्पे सर्पतयाऽवलोकिताद् दाम्नोऽपि भीतिरुदेति, तथा सीताविषयिणी अनुरागरूपा रामरतिः नर्तकेऽविद्यमानापि नाट्यनैपुण्येन तस्मिन् स्थिते प्रतीयमाना सहृदयहृदये चमत्कारम् अर्पयन्त्येव रसपदवीमधिरोहतीति।

## श्रीशङ्कुकमतेन रसस्वरूपं व्याख्यायताम्

'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति रसविषयकं भरतसूत्रम्। अस्य सूत्रस्य भट्टलोल्लटप्रभृतीनां व्यख्याने, अनुकार्ये रामादावेव रसनिष्पत्त्या सामाजिके रसनिष्पत्तेरभावात् सामाजिकानां चमत्कारानापत्तिः स्यात्। एतदेवारुचेर्बीजम्।

सम्प्रति शङ्कुकमतेन रसविषयकं भरतसूत्रं व्यख्यायते-

'स्थायिनो विभवादिरुक्तरूपैः संयोगात् अनुमाज्यानुमापकभावरूपात् सम्बन्धात्, रसस्य निष्पत्तिः = अनुमितिर्भवति' इति नैयायिकः शङ्कुकः सूत्रार्थं प्रतिपादयति। तथा हि-

प्रतीतयो लोके चतुर्विधा भवन्ति - सम्यक्प्रतीतिः, मिथ्याप्रतीतिः, संशयप्रतीतिः, सादृश्यप्रतीतिश्चेति। तत्र सम्यक्प्रतीतिस्तावत् 'राम एवाऽयम्' इति अयोगव्यवच्छेदविषये 'अयमेव रामः, इति अन्ययोगव्यवच्छेदविषये। 'न रामोऽयम्' इत्यौत्तरकालिके बाधे सति 'रामोऽयम्' इत्यनन्तरावतीर्णविपरीतप्रतीतिकतया मिथ्याप्रतीतिः। यथा 'नेदं रजतम्' इत्यौत्तरकालिके बाधे सति शुक्तौ रजतप्रतीतिः। 'रामसदृशोऽयम्' इति सादृश्यप्रतीतिः। एताभ्यः सम्यक् मिथ्या - संशय-सादृश्य-प्रतीतिभ्यो विलक्षणाया चित्रतुरगन्यायेन 'चित्रे तुरगोऽयम्' इति प्रतितिवद् रामोऽयम्' इति प्रतीत्या ग्राह्ये नटे (अभिनेतरि) अनुमितौ पक्षरूपे-

सेयं ममाङ्गेषु सुधास्सच्छटा सुपूरकर्पूरशलाकिका दृशोः।

मनोरथश्रीर्मनसः शरीरिणी प्रोणेश्वरी लोचनगोचरं गता।।'

'र्देवाहमद्य तया चपलायतनेत्रया वियुक्तश्च। अविरलविलोलजलदः कालः समुपागतश्चायम्।।"

इत्यदिकाव्यानुसन्धानशिक्षाऽभ्यासबलात् स्वकार्यनैपुण्यप्रकाशनद्वारा नटेन प्रकाशितैः, कारणकार्यसहकारिभिः वस्तुतोऽसद्भिरपि कृत्रिमत्वेनाऽनुगृहीतैः विभावादिशब्दव्यवहारैः विभावादिसत्वे रतेरवश्यं भावः, इति व्याप्रिरूपात् 'रामोऽयं। सीताविषयकरतिमान् सीताविषयककटक्षादिमत्त्वात्' इत्येवंरुपेण समाजिकैरनुमीयमानः, आस्वाद्यमानतया लौकिकाऽनुमानविलक्षणे रत्यादिर्भावो नटेऽसन्नपि समाजिकानां वासनया चर्व्यमाणो रस इति।

एतन्मतस्यायं निष्कर्षः - यथा कुज्झटिकाकुलिते देशेऽसतोऽपि धूमस्याभिमानात् धूमनियतस्य वह्नेरनुमानं तथा नटेनैव सुनिपुणं 'ममैवेते विभावादयः' इति प्रकाशितैः, तत्र असद्भिरपि विभावादिभिछ तन्नियता रतिरनुमीयमानाऽपि निजसौन्दर्यबलात् सामाजिकानाम् आस्वाद्यमानतया चमत्कारम् आदधती रसतामेतीति रतेरनुमितिरेव रसनिष्पत्तिरिति।

आस्मिन् द्वितीये व्याख्याने 'प्रत्यज्ञानं चमत्कारकं नाऽनुमित्यादिः' इति लौकिकप्रसिद्धविरोधः। संज्ञातबाधस्य सामाजिकस्य नटे निरुक्तानुमितिविरहेऽपि आस्वादोद्याद् रसं साक्षात्करोमीति अनुव्यवसायानुपपत्तिश्चेति अरुचेर्बीजम्।

## भट्टनायकस्य रसस्वरूपं वर्णयत

'विभावानुभावव्यभिचारिसंयोगद्ररसनिष्पत्तिः इति भरतस्य रससूत्रम्। शङ्कुकमते तु प्रत्यक्षमेव ज्ञानं चमत्कारजनकं नाऽनुमित्यादिः' इति लोकप्रसिद्धिविरोधः। संज्ञातबाधस्य सामाजिकस्य नटे निरुक्तानुमितिविरहेऽपि आस्वादोदयाद्, रसं साक्षात्कारोमीत्यनुव्यवसायाऽनुपपत्तिश्चेति अरुचेर्बीजम्।

भट्टनायकमतेनाऽस्य तात्पर्यं यत् 'विभावदिभिः संयोगात् = भोज्यभोजकभावसम्बन्धात् रसस्य निष्पत्तिः = भुक्तिर्भवति' इति। यथा हि प्रत्यासन्नास्त्रयः - नटो, नायको रामादिः सामाजिकक्ष्चेति। तत्र न ताटस्थ्येन= न च समाजिकसम्बन्धित्वेन, रसो न प्रतीयते = नाऽनुमीयते। तदानीं रामादीनामभावेन तद्रत्यादेरप्यभावात्। असतः

सत्वेनऽनु मानप्रमाणाविषयत्वात्। असतः सत्वेनऽनुमानप्रमाणाविषयत्वात्। वस्तुतो रामागतया नटगत्त्वेनाऽनुमितयापि रत्या सामाजिकेऽसत्या तच्चमत्कारजननाऽसम्भवात्।

न चोत्पद्यते विभावादीनां वास्तविकत्वाभावात्। न चाभिव्यज्यते =न व्यञ्जनयोपस्थाप्यते, सिद्धस्यैव तत्सम्भवादिति भावः। अपितु अभिधालक्षणाभ्याम् अन्येन विभावादिसधारणीकरणरूपेण भावकत्वव्यापारेण साधारणीक्रियमाणः (भाव्यमानः) स्थायी सत्त्वोद्रेकेण रजस्तमसी अभिभूय आविर्भावेण यः प्रकाशः स एवानन्दात्मिका संवित् = ज्ञानम्, तस्य विश्रान्तिः = ज्ञेयान्तरसम्पर्केणावस्थानम्, तत्सतत्वेन तत्स्वरूपेण भोगेन = भोजकत्वाव्यापारेण साक्षात्कारेण वा भुज्यते = विषयीक्रियते।

अयं भावः - शब्दस्याभिधाव्यापारवत् काव्यनाट्ययोः तद्विलक्षणं भावकत्वभोजकत्वनामकं व्यापारद्वयमतिरिक्तमस्ति। काव्यार्थबोधोत्तरमेव तत्राद्येन भावकत्वव्यापारेण विभावादिरूपसीतादयो रामसम्बिन्धिनी रतिश्च सीतात्वरामत्वसम्बन्धांशमपहाय सामान्यतः कामिनीत्वरतित्वादिनौवोपस्थाप्यते। अन्तेन भोजकत्वव्यापारेण तु उक्तरीत्या साधारणीकृतविभावादिसहकृतेन सा रतिः सहृदयैरास्वाद्यते (अत एव, असत्या अपि रतेरास्वादः, अलौकिकत्वादुपपन्नः), इति रतेरास्वाद एव रसनिष्पत्तिरिति।

उक्ततृतीये भट्टनायकस्य व्याख्यानेऽपि एताद्दशव्यापारद्वयकल्पने प्रमाणाभावः। साक्षात्कारस्य तथाविधकल्पने प्राणाभावश्च। न च व्यञ्जनास्थाने तथाविधभोग एव कश्चिद्व्यापारः कल्पनीय इति वाच्यम्। तथापि भावकत्वरूपाधिकव्यापारान्तरकल्पनस्यैव दोषत्वादित्यरुचेर्बिजम्।

## अभिनवगुप्तमते रसस्वरूपं वर्णयत

भट्टनायकमतेऽस्मिन् तृतीयव्याख्याने एतादृशभावकत्वभोजकत्वरूपव्यापारद्वयकल्पने मानाऽभावः। साक्षात्कारस्य तथाविधकल्पने प्रमाणाभावश्च व्यञ्जनास्थाने भोजकत्वव्यापारकल्पनेऽपि भावकत्वरूपाधिकव्यप्पारान्तरकल्पनस्यैव दोषत्वादित्येवरुचेर्बीजम्।

'विभावानुभावव्यभिचारिसंयोग्राद्रसनिष्पत्तिः' इति भरतसूत्रम्

अस्य अभिनवगुप्तानां मते स्थायिनां विभावादिभिः समं संयोगात् = व्यङ्ग्यव्यञ्जकभावरूपात् सम्बन्धात्, विभावादीनामेव वा परस्परं संयोगात् = मिलनात्, रसस्य निष्पत्तिः = अभिव्यक्तिरिति संक्षिप्तार्थः। तथा हि - प्रमदादिभिरालम्बनकारणैः, ज्योत्स्नोद्यानभ्रमरझङ्कारप्रभृतिभिरुद्दीपनकारणैः, कटाक्षभुजाक्षेपादिभिरनुभावैः चिन्ताऽऽलस्यप्रभृतिभिः सञ्चरिभावैः 'दुष्यन्तोऽयं शकुन्तलाविषयकरतिमान्, शकुन्तलाविषयककटाक्षादिमत्वात् यन्नैव तन्नैवं यथाऽहम्' इत्येवं रत्यादेरनुमानेऽभ्यासनैपुण्य वतां सामाजिकानां काव्ये नाट्ये च कारणत्वकार्यत्वसहकारित्वव्यपदेशपरित्यागेन विभावानाऽनुभावनव्यभिचारणव्यापारवत्वात् अलौकिकविभावादिशब्दव्यवहारैः, ममैवैते, शत्रोरैवैते, तटस्थस्यैवैते विभावादयः इति सम्बन्धविशेषस्वीकारनियमस्य, न ममैवैते, न शत्रोरेवैते, न तटस्थस्यैवेते विभावादय इति सम्बन्धविशेषपरिहारनियमस्य चाऽनिर्णयात् साधारण्येन प्रतीतैः, शकुन्तलात्वादिविशेषांशरहितेन कामिनीत्वादिना ज्ञायमानैः अभिव्यक्तः सामाजिकसंस्कारररूपेण सूक्ष्मतया

पूर्वतः स्थितेऽपि संप्रति तु साधारणीकृतविभवादिभिः आविर्भूतो रत्यादिस्थायी नियतसामाजिकरूपप्रमातृगतोऽपि व्यक्तिविशेषांशपरिहारवशात् लौकिकज्ञेयान्तरसम्पर्कशून्यचेतसा सकलहृदयसंवादभाजा प्रमात्रा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतः, आस्वादैकप्राणविभावदिकालमात्रास्थायी, पानकरसन्यायेन आस्वााद्यमानः, पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवाऽऽलिङ्गन् अन्यत् सर्वं तिरोदधद् बह्मास्वादमिवानुभावयन् श्रृङ्गारादिको रस इति अभिनवगुप्तपादाः ।